सूत —

एव ब्रुवाणे सति बादराय[1]णौ
मध्ये सभाया हरिराविरासीत् ।
प्रह्लादबल्युद्धवफाल्गुनादिभि
वृत सुरर्षिस्तमपूजयच्च तान् ॥ ८५

दृष्ट्वा प्रसन्न महदासने हरिं
ते चक्रिरे कीतनमग्रतस्तदा ।
भवो भवान्या कमलासनस्तु
तत्राग[2]मत्कातनदर्शनाय ॥ ८६

प्रह्लादस्तालधारी तरलगातितया चोद्धव कास्यधारी
वीणाधारी सुरर्षि स्वरकुशलतया रागकर्ताऽर्जुनोऽभूत् ।
इन्द्रोऽवादी मृदङ्ग जयजयसुकरा कातने ते कुमारा
यत्राग्रे भाववक्ता सरसरचनया व्यासपुत्रो बभूव ॥ ८७

ननत मध्ये त्रिकमेव तत्र
भक्त्यादिकाना नटवत्सुतेजसाम् ।
अलौकिक कातनमेतदीक्ष्य
हरि प्रसन्नोऽपि वचोऽब्रवीत्तत् ॥ ८८

मत्तो वर [3]भावयुताद्वृणुध्व
प्रीत कथाकीतनतोऽस्मि साम्प्रतम् ।

---

1 णे   2 मन्   3 भागवता

श्रुत्वेति तद्वाक्यमतिप्रसन्ना
प्रेमार्द्रचित्ता हरिमूचिरे ते ॥ ८९

नगाहगाथासु च सर्वभक्तै
रेभिस्त्वया भाव्य[1]मिति प्रयत्नात् ।
मनोरथोऽयं परिपूरणीय
स्तथेति चोक्त्वा तरधीयताच्युत ॥ ९०

ततोऽनमत्तच्चरणेषु नारद
स्तथा शुकादीनपि तापसांश्च ।
अथ प्रहृष्टा परिनष्टमोहा
सर्वे ययु पातकथामृतास्ते ॥ ९१

भक्ति सुताभ्या सह रक्षिता सा
शास्त्रे स्वकायेऽपि तदा शुकेन ।
अतो हरिर्भागवतस्य सेवना
चित्त समायाति हि वैष्णवानाम् ॥ ९२

दारिद्र्यदु ख ज्वरदाहिताना
मायापिशाचीपरिमर्दितानाम् ।
ससारसिन्धौ परिपातिताना
क्षेमाय वै भागवत प्रगजति ॥ ९३

---

1 मति

शौनक—

शुकेनोक्त कदा राज्ञे गोकर्णेन कदा पुन ।
सुरधये कदा ब्रह्मर्षिर्छिन्धि मे सशय त्विमम् ॥ ९४

सूत—

आकृष्णनिर्गमात् त्रिंशद्वर्षाधिकगते कलौ ।
नवमातो नभस्ये च कथारम्भ शुकोऽकरोत् ॥ ९५

परीक्षिच्छ्रवणा ते च कलौ वर्षशतद्वये ।
शुद्धे शुचौ नवम्या च धेनुजोऽकथयत्कथाम् ॥ ९६

तस्मादपि कलौ प्राप्ते त्रिंशद्वर्षगत सति ।
ऊचुरूर्जे सिते पक्षे नवम्या ब्रह्मण सुता ॥ ९७

इत्येतत्ते समाख्यात यत्पृष्टोऽह त्वयानघ ।
कलौ भागवती वार्ता भवरोगविनाशिना ॥ ९८

कृष्णप्रिय सकलकल्मषनाशन च
मुक्त्यैकहेतुरिह भक्तिविलासकारि ।
सन्त कथानकमिद पिबतादरेण
लोके हि तीर्थपरिशीलनसेवया किम् ॥ ९९

स्वपुरुष[1]मपि वीक्ष्य पाशहस्त
वदति यम किल तस्य कर्णमूले ।
परिहर भगवत्कथासु मत्ता
प्रभुरहम यनृणा न वैष्णवानाम् ॥ १००

1 मपि

असारे ससारे विषयविष[1]सङ्गाकुलधिय

क्षणार्धं क्षेमार्थं पिवत शुकगाथातुलसुधाम् ।

किमर्थं व्यर्थं भो व्रजत कुपथे कुत्सितपथे

परीक्षित्साक्षी यच्छ्रवणगतमुक्त्युक्तिकथने ॥ १०१

[2]रसप्रवाहसस्थेन श्रीशुकेनेरिता कथा ।

कण्ठे सम्बध्यते येन स वैकुण्ठप्रभुर्भवेत् ॥ १०२

इति च परमगुह्य सर्वसिद्धान्तसिद्ध

सपदि निगदित ते शास्त्रपुञ्ज विलोक्य ।

जगति शुककथातो निर्मल नास्ति किञ्चि

त्पिब परसुखहेतोर्द्वादशस्कन्धसारम् ॥ १०३

एता यो नियततया शृणोति भक्त्या

यश्चैना कथयति शुद्धवैष्णवाग्रे ।

तौ सम्यग्विधिकरणात्फल लभेते

याथार्थ्यान्न हि भुवने किमप्यसाध्यम् ॥ १०४

इति श्रीपद्मपुराणे उत्तरखण्डे श्रीभागवतमाहात्म्ये षष्ठोऽध्याय

॥ समाप्तमिद श्रीमद्भागवतमाहात्म्यम् ॥

---

1 सङ्ग 2 रह

श्रीमद्भागवताख्यपुराणरत्नान्तर्गतद्वादशस्कन्धानां

## ॥ अध्यायार्थसंग्रहश्लोकाः ॥

॥ प्रथमस्कन्धे ॥

शास्त्रौघसारश्श्रीकृष्णकृत्य सम्बन्धादिकेऽद्य ।
अवतारकथा कृष्णवृत्तयो धर्मरक्षणम् ॥ १

तदेव प्रथमेऽध्याये षट् प्रश्ना मुनिभिः कृताः ।
द्वितीये तूत्तरं सूतश्चतुर्णामाह तेभ्य र ॥ २

अवतारकथाप्रश्ने तृतीये तूत्तराभिधा ।
पुरुषाद्यवताराख्या तत्तच्चारित्रवर्णने ॥ ३

तुर्ये भागवतारम्भकारणत्वेन वर्ण्यते ।
व्यासस्यापरितोषस्तु तप प्रवचनादिभिः ॥ ४

पञ्चमे सर्वधर्मेभ्यो हरिकीर्तनगौरवम् ।
व्यासचित्तप्रसादाय नारदेनोपदिश्यते ॥ ५

व्यासस्य प्रत्ययार्थं हि षष्ठे प्राग्जन्मसम्भवम् ।
स्वभाग्य नारद प्राह कृष्णसङ्कीर्तनोद्भवम् ॥ ६

अथ भागवतश्रोतुर्जन्म वस्तु परीक्षितः ।
सुप्तबालवधाद्द्रौणेर्दण्डस्सप्तम उच्यते ॥ ७

अष्टमे कुपितद्रौणेरस्त्राद्रक्षा परीक्षित ।
श्रीकृष्णस्तुति कुन्त्या राज्ञश्शोकश्च कीर्त्यते ॥ ८

युधिष्ठिराय भीष्मेण सर्वधर्मनिरूपणम् ।
श्रीकृष्णस्तुतिमुक्तिर्नवमे तस्य वर्ण्यते ॥ ९

दशमे कृतकार्यस्य हस्तिनापुरतो हरे ।
स्त्रीभिस्संस्तूयमानस्य वर्ण्यते द्वारकागम ॥ १०

एकादशे रतिस्सम्यग्यादवे न्द्रस्य वर्ण्यते ।
आनर्तैस्स्तूयमानस्य पुरीं निर्विश्य बन्धुभि ॥ ११

पूर्वोक्त यत्प्रसङ्गाद्द्रोणिदण्डादिविस्तरात् ।
द्वादशे तु तथैवाथ परीक्षिज्जन्म वर्ण्यते ॥ १२

निर्गमो धृतराष्ट्रस्य विदुरोक्त्या त्रयोदशे ।
उक्त पौत्राभिषेकेण यस्तु राज्ञो महापथम् ॥ १३

चतुर्दशे त्वरिष्टानि दृष्ट्वा राजा विशङ्कित ।
अशृणोदर्जुनात्कृष्ण तिरोधानमितीर्यते ॥ १४

कलिप्रवेशमालक्ष्य धुर यस्य परीक्षिति ।
आरुरोह नृपस्स्वर्गमिति पञ्चदशेऽब्रवीत् ॥ १५

ततश्च षोडशे भूमिधर्मयो कलिखिन्नयो ।
संवादो वर्ण्यते प्राप्ति पालकस्य परीक्षित ॥ १६

ततस्सप्तदशे राज्ञ कलेर्निग्रह उच्यते ।

तस्यैव वीर्यभाजोऽपि वैराग्यं वक्ष्यतेऽद्भुतम् ॥ १७

राज्ञस्त्वष्टादशे तस्य ब्रह्मशापो निरूप्यते ।
सचानुग्रह एवास्य जातो वैराग्यमावहन् ॥ १८

प्रायोपविष्टे गङ्गायां राज्ञि योगिगणावृते ।
शुकस्यागमनं तत्र प्रोक्तमेकोनविंशके ॥ १९

॥ द्वितीयस्कन्धे ॥

तत्र तु प्रथमेऽध्याये कीर्तनश्रवणादिभिः ।
स्थविष्ठे भगवद्रूपे मनसो धारणोच्यते ॥ १

द्वितीये तु ततः स्थूलधारणातो जितं मनः ।
सर्वसाक्षिणि सर्वेशे विष्णौ धार्यमितीर्यते ॥ २

इत्यालम्बनरूपैव मुक्तावैराजधारणा ।
इहोच्यते तु तत्राद्या सद्यः तथाभिधारणा ॥ ३

तृतीये विष्णुभक्तेस्तु वैशिष्ट्यं शृण्वतो मुनेः ।
भक्त्युद्रेकेण तत्कर्मश्रवणादर इर्यते ॥ ४

तुर्ये परीक्षिता पृष्टं सृष्ट्यादि हरिचेष्टितम् ।
शुकेन ब्रह्मतत्पुत्रसंवादेनोपवर्ण्यते ॥ ५

पञ्चमे नारदेनाथ पृष्टः सृष्ट्यादि पङ्कजः ।
हरेर्लीलाविराट्सृष्टिं कालकर्मादिशक्तिभिः ॥ ६

षष्ठे विराड्विभूतिश्च प्रोक्ताध्यात्मादिभेदतः ।

दृढीकृत तु पूर्वोक्त सर्वं पुरुषसूक्तत ॥ ७
उच्यन्ते सप्तमे लीलावतारा ब्रह्मणोदिता ।
नारदाय तु तत्कर्मप्रयोजनगुणैस्सह ॥ ८

अष्टमे देहसम्बन्धमाक्षिपन्नीशजीवयो ।
बहून् परीक्षिदापृच्छत्पुराणार्थान् बुभुत्सितान् ॥ ९

राजप्रश्नोत्तर वक्तु ब्रह्मणे हरिणोदितम् ।
कथयामास नवमे शुको भागवत पुन ॥ १०

ततो भागवतव्याख्याद्वारैव दशमे स्फुटम् ।
राजप्रश्नोत्तर वक्तुमारेभे बादरायणि ॥ ११

॥ तृतीयस्कन्धे ॥

तत्र तु प्रथमाध्याये बन्धून् हित्वा गतायुष ।
निर्गतस्योद्धवेनादौ संवाद क्षत्तुरुच्यते ॥ १

द्वितीये कृष्णविश्लेषान्नुशोचन्नथोद्धव ।
क्षत्त्रे बालचरित्राणि कृष्णस्यावर्णयच्च सन् ॥ २

तृतीये मधुरामेत्य व्रजात्कंसवधादिकम् ।
यत्कृत द्वारकाया च कृष्णेन तदवर्णयत् ॥ ३

चतुर्थे बन्धुनिधन श्रुत्वा तज्ज्ञानलब्धये ।
उद्धवस्योपदेशेन क्षत्ता मैत्रेयमागतम् ॥ ४

पञ्चमे भगवल्लीला क्षत्त्रा पृष्टो महामुनि ।

प्रोवाच महदादीना सर्गं तैश्च हरेस्स्तुतिम् ॥ ५

उक्तश्चतुर्भिरध्यायै क्षत्त्रा मैत्रेय सङ्गम ।
सवादस्तु तयोस्स्क धह्वयेनाथ निगद्यते ॥ ६

कौषारव पर्यपृच्छद्गङ्गाद्वारे कृतक्रियम् ।
विदुर कृष्णनिर्दिष्ट मुकुन्द मनसा गत ॥ ७

षष्ठे तैरम्बराविष्टैस्सृष्टिमाह विराट्तनो ।
अधिदैवादिभेद च तत्रैव भगवत्कृतम् ॥ ८

सप्तमे सशयच्छेदि प्रतिन य मुनेर्वच ।
पुन क्षत्त्रा कृता नानाप्रश्नास्सम्यगुदारिता ॥ ९

अष्टमे समभूद्ब्रह्मा नाभेस्तु जलशायिन ।
समजानन् जले विन्यस्तपसा तोषयद्धरिम् ॥ १०

नवमे तपसा तुष्ट दृष्ट्वा नारायण त्वज ।
अस्तौन्नेकार्णवे सीदन् लोकसर्गचिकार्षया ॥ ११

दशमे कालसम्प्रश्न प्रतिवक्तु तदुद्भव ।
प्राकृतादिविभागेन सर्गस्तु दशधोच्यते ॥ १२

अथत्वेकादशे काल परमाण्वादिलक्षणै ।
युगम व तरादिभ्य कल्पमानादि वर्ण्यते ॥ १३

द्वादशे तु कुमारादि मनस्सर्गोऽथमैथुनात् ।
कायद्वैधेन यौनस्तु मनुसर्गोऽनुवर्ण्यते ॥ १४

त्रयोदशे सिसृक्षाया मनोराकस्मिकाप्लुते ।
धरामुद्धर्तुमुद्भूतात्क्रोडाद्दैत्यानुसूदनम् ॥ १५

चतुर्दशे निदानं तु तद्वधे वक्तुमुच्यते ।
सन्ध्याया कश्यपाद्गर्भसम्भवः कामतोऽर्थिते ॥ १६

हतप्रभैस्सुरैः पृष्टः प्राह पञ्चदशे विधिः ।
सद्बीजविप्रशापादि वैकुण्ठे विष्णुभृत्ययोः ॥ १७

हरिणा सान्त्वितैर्विप्रैरनुतप्तैस्तु षोडशे ।
तयोरसुरभावेऽपि कृतोऽनुग्रह इयते ॥ १८

ततस्सप्तदशे जन्म तयोर्लोकभयङ्करम् ।
हिरण्याक्षप्रभावश्च वर्ण्यते दिग्जयेऽद्भुतम् ॥ १९

अष्टादशे हिरण्याक्षधरावनवराहयोः ।
निर्विशेषं महायुद्धं देवरक्षा निरूप्यते ॥ २०

ऊनविंशे विरिञ्च्यादिप्रार्थितेन महामृधे ।
वराहेण हिरण्याक्षवधश्शक्त्या योऽनुवर्ण्यते ॥ २१

विंशे वराहजन्मादिव्यवधानादथोदित ।
सर्गोऽनुस्मर्यते वक्तुम वय प्रस्तुत मनो ॥ २२

एकविंशे तपोविद्यातापितेन तु विष्णुना ।
कर्दमस्य मनोः पुत्र्या विवाहघटनोच्यते ॥ २३

द्वाविंशे कर्दमायादाद्यथादिष्टं हि विष्णुना ।

मनुर्दुहितर देवहूतिमित्युपवर्ण्यते ॥ २४

त्रयोदशे तपोयोगनिर्मिते सर्वसम्पदि ।
विमाने कामगे चित्रा तयो रीतिर्निरूप्यते ॥ २५

चतुर्विंशे ततो जन्म कपिलस्याह तत्पितु ।
प्रव्र या तमनुज्ञाप्य ऋणत्रयविमोक्षत ॥ २६

पञ्चविंशे जनन्या तु पृष्टो बन्धविमोचनम् ।
आदावाह पर भक्तिलक्षण कपिलस्सुत ॥ २७

षड्विंशे पुप्रकृत्योस्तु विवेकायोपवर्ण्यत ।
साङ्ख्येन सर्वभावाना जन्मलक्षणभेदन ॥ २८

धाता पुत्राय यत्प्रोक्त क्षत्रे मित्रासुतेन यत् ।
मात्रे साङ्ख्य तदध्यात्म प्राथा येनाह तत्त्ववित् ॥ २९

सप्तविंशे ततस्सम्यग्बहुसाधनयोगत ।
पुप्रकृत्योर्विवेकेन मोक्षरीतिर्निरूप्यते ॥ ३०

अष्टाविंशे ततोऽष्टाङ्गयोगेशध्यानशोभिना ।
सर्वोपाधिविनिर्मुक्तस्वरूपज्ञानमीयते ॥ ३१

भक्ति सङ्क्षेपत प्रोच्य साङ्ख्यमाख्याय विस्तृतम् ।
अथाह वैष्णव योगमष्टाङ्ग कपिलो हरि ॥ ३२

एकोनत्रिंशके भक्तियोगस्तु बहुधोच्यते ।
कालस्य च बल घोरसंसृतेश्च विरक्तये ॥ ३३

त्रिंशे तु कायका तान्लिालनाकुलचेतसाम् ।
कामिना तामसा पापादधोगतिरुदायते ॥ ३४

एकत्रिंशे विमिश्रैस्तु पुण्यपापैरिहा तरा ।
मनुष्ययोनिसम्प्राप्तिवर्ण्यते राजसी गति ॥ ३५

द्वात्रिंशे सात्त्विकैर्धर्मैर्लब्ध्वा गतिरुदायत ।
तत्त्वज्ञानविहीनस्य ततश्च पुनरागति ॥ ३६

त्रयस्त्रिंशे तु तस्यैव कपिलस्योपदेशत ।
ज्ञानभावेन त मातुर्जीव मुक्तिरुदीयत ॥ ३७

॥ चतुर्थस्कन्धे ॥

तत्र तु प्रथमाध्याये मनुकन्या वया पृथक् ।
वण्य ते यत्र यज्ञादिमूर्तिभि प्रभवा हरे ॥ १

द्वितीये प्रथमाध्यायोपक्षिप्तभवदक्षयो ।
विद्वेषे वर्ण्यते हेतुर्विश्वसृड्यज्ञसम्भव ॥ २

तृतीये तु सती तात यज्ञोत्सवदिदृक्षया ।
गमिष्य ता महेशेन वारिता नातिहेतुभि ॥ ३

चतुर्थे तु पति हित्वा गता पित्रावमानिता ।
रुषा निभस्य त यज्ञ जहौ देहमितीयत ॥ ४

पञ्चमे तु सती देहत्यागमाकर्ण्य शङ्कर ।
वीरभद्र रुषोत्पाद्य तेन दक्षमजीघनत् ॥ ५

षष्ठे तु देवसङ्घेन सह गत्वा भव निधि ।
सा त्वयामास दक्षादिजीवितायथमादरात् ॥ ६

सप्तमे चि गुरुद्भूतस्स्तुतो दक्षभवान्तिभि ।
यज्ञ प्रवर्तयामास दक्षेणेति निरूप्यत ॥ ७

मनुक या त्रये प्राप्ता दक्षयज्ञकथोदिता ।
मनुपुत्रा त्रये प्राप्ता ध्रुवचर्याथ पञ्चभि ॥ ८

अष्टम गुरुदारोक्तिरोपमत्सरत पुरात् ।
निर्गतेन ध्रुवेणाह तपसा तोषण हरे ॥ ९

नवमे तु हरिं स्तुत्वा ल ध्वा तस्माद्वरान् ध्रुव ।
प्रत्यागत्यारुरोहा य पित्रा दत्तमितीर्यते ॥ १०

दशमे भ्रातृह तृणा यक्षाणामकरोद्वधम् ।
एकएवा क्राङ्क्षत्वेन्यस्य विक्रम ईर्यते ॥ ११

एकादश तु यक्षाणा दक्ष दृष्ट्वा मनुस्स्वयम ।
आगत्य वारयामास ध्रुव तत्त्वोपदेशत ॥ १२

द्वादशे धनदेनाभिनन्दित पुरमागत ।
यज्ञैरिष्ट्वा हरेस्स्थानमारोहेति कीर्त्यते ॥ १३

एव पञ्चभिरध्यायैर्ध्रुवचर्यानुवर्णिता ।
अथैकादशभिश्चित्र पृथुचारित्रमुच्यते ॥ १४

तत्र त्रयोदशे वक्तु पृथोजन्म ध्रुवा वये ।

अङ्गो वेनपिता पुत्रकौर्याद्वतइतायते ॥ १५

चतुर्दशे तु दुष्पुत्रभयादङ्गे गते द्विजै ।
अभिषिक्तस्य वेनस्य रोषाच्चैवध उच्यते ॥ १६

तत पञ्चदशे विप्रैमद्नाद्वेनबाहुत ।
जातस्य तु पृथोरुक्तमभिषेकाहणादिकम् ॥ १७

षोडशे सवलोकेशैरसत्कृत भायया युतम् ।
मुनिप्रयुक्तास्सूताद्यास्तुव ति स्मति वण्यते ॥ १८

ततस्सप्तदशे लोके क्षुध प्रशमयन पृथु ।
प्रस्तवाना महीं ह तु यत्तो भात्या तया स्तुत ॥ १९

आलोलतुलसीमाल्मारूटविनतासुतम् ।
ज्योतिरि दीवरश्याममाविरस्तु ममाग्रत ॥ २०

अष्टादशे मन्वास्याद्वत्सपात्रादिभेन्त ।
पृथ्वाग्भिस्तु क्रमशस्सा दुग्धेति निरूप्यत ॥ २१

ऊनविंशेऽश्वमेधाह्वयापहरणात्पृथो ।
इ द्र ह तु प्रवृत्तस्य धात्रा वारणमुच्यत ॥ २२

विंशे तु विष्णुना साक्षात्पृथोर्यज्ञेऽनुशासनम् ।
वरदानप्रसङ्गेन प्रीतिश्चा यो यमायते ॥ २३

एकविंशे तु पृथुना प्रजानामनुशासनम् ।
महासत्रे सुरादीना महासदसि वण्यत ॥ २४

द्वाविंशे तु पर ज्ञान पृथवे हरिशासनात् ।
सन कुमारो भगवानुपादिशदितायते ॥ २५

त्रयोविंशे सभार्यस्य वने नित्यसमाधित ।
विमानमधिरुह्याथ वैकुण्ठगतिरायते ॥ २६

एकादशभिरध्यायै पृथोश्चरितमारितम् ।
प्रचेतसामथाग्राभिस्त मध्ये पञ्चभि पितु ॥ २७

चतुर्विंशे प्रपौत्रात्तु पृथो प्राचानबर्हिष ।
प्रचेतसा चनिस्तेभ्यो रुद्रगात च वण्यते ॥ २८

प्रचेतःसु तपस्य सु तत्पित्रे नारदो घृणा ।
प्राचानबर्हिपे ध्या म परोक्षेणाह पञ्चभि ॥ २९

पुरञ्जनकथा याजात्पञ्चविंशे तु नारद ।
आत्मनो बुद्धिसङ्गेन निविधामाह सस्रुतिम् ॥ ३०

प्रचेतस्सु तपस्तात्र तप्यमानेषु नारद ।
पुरञ्जनकथाकूट प्राह प्राचीनबर्हिषे ॥ ३१

षडिशे मृगयाव्याजा स्वप्नजागरणोक्तिभि ।
सद्बुद्धित्यागयोगाभ्या ससृतिस्सा प्रपञ्च्यते ॥ ३२

सप्तविंशे प्रियापुत्राद्यासक्त्या विस्मृतात्मन ।
कालकन्यासुपारयानैजरारोगानुदीयत ॥ ३३

अष्टाविंशे तु वैदभ्या ध्यानेन स्वाविचितया ।

स्त्रीत्वं प्राप्तस्य दैवेन कदाचित् मुक्तिरुच्यते ॥ ३४

ऊनत्रिंशे परोक्षार्थव्याख्यानेनोपसंहृतम् ।
स्वासङ्गतो भवस्तत्रागसङ्गा मुक्तिरुदार्यते ॥ ३५

प्रसङ्गात्पञ्चभिः प्रोक्तं वृत्तं प्राचीनबर्हिषः ।
वर्ण्यते च पुनस्ताभ्यां प्रस्तुतं च प्रचेतसाम् ॥ ३६

तत्र त्रिंशे तपस्तुष्टदेवाद्भवरास्ततः ।
आगत्य वार्क्षीमुद्वाह्य राज्यं चक्रुरितीर्यते ॥ ३७

एकत्रिंशे सुते दक्षे धुरं न्यस्य प्रचेतसः ।
नारदोक्तेन मार्गेण गता मुक्तिमितीर्यते ॥ ३८

॥ पञ्चमस्कन्धे ॥

तत्र तु प्रथमेऽध्याये ज्ञानिनो राज्यनिर्वृतिः ।
पुनश्च ज्ञाननिष्ठेति प्रियव्रतकथाद्भुता ॥ १

वंशं प्रियव्रतस्यापि निबोध नृपसत्तम ।
यो नारदादात्मविद्यामधिगम्य पुनर्महीम् ॥ २

भुक्त्वा विभज्य पुत्रेभ्य ऐश्वर्यं समगात्पदम् ।
द्वितीये प्रोक्तमाग्नीध्रचरितं कौणसम्मतम् ॥ ३
पत्न्या हि पूर्वचित्त्या यो नाभिमुख्यानजीजनत् ॥ ३॥

अस्मिन् वंशे प्रसिद्धोऽयमाग्नीध्रस्तोणपुङ्गव ।
विहसन्निव तस्येदं चरितं मुनिरब्रवीत् ॥ ४॥

तृतीये चरितं नाभेः परं मङ्गलमायतम् ।
यस्य यज्ञे प्रतीतस्सन् पुत्रोऽभूदृषभो हरिः ॥ ५॥

चतुर्थाध्यायेऽस्मिन् प्रोक्तमृषभस्येहितं महत् ।
लोकार्थं येन सत्कर्म नैष्कर्म्यं च प्रदर्शितम् ॥ ६॥

चतुर्थे शतपुत्रस्य राज्यं तस्योपवर्ण्यते ।
यस्य राज्ये जनस्त्वासन् तोषामृतनिर्वृतः ॥ ७॥

पञ्चमे मोक्षधर्मोपदेशैः पुत्रानुशासनम् ।
उक्तं पारमहंस्यं च तस्य दृढतितिक्षया ॥ ८॥

षष्ठे त्वनाभिमानस्य देहत्यागक्रमाभिधा ।
प्रन्द्र् त दवाग्नि य पश्यन्नपि न पश्यति ॥ ९॥

अध्यायानां त्रयेणैवमृषभाख्यानमीरितम् ।
अष्टभिर्भरताख्यानमितः प्रस्तूयते स्फुटम् ॥ १०॥

सप्तमे भरतो राज्ये चिरं यज्ञैर्हरिं यजन् ।
आरब्धकर्मनिर्वाणो हरिक्षेत्रेऽभजद्धरिम् ॥ ११॥

अष्टमे भजतो विष्णुं तस्य कर्मान्तरायतः ।
एणरक्षाप्रसक्तस्य जातमेणत्वमायते ॥ १२॥

कृपयापि कृतस्सङ्गः पतनायैव योगिनः ।
इति प्रदर्शयन्नाह भरतस्यैणपोषणम् ॥ १३॥

पितुः प्राप्तात्मविज्ञानो भरतो मृगतां गतः ।
प्रारब्धकर्मवेगेन तदन्ते जडविप्रताम् ॥ १४॥

नवमे जडविप्रत्वे तस्य रागाद्यभावत ।
भद्रकालीपशुत्वेऽपि निर्विकारत्वमार्यते ॥ १५॥
दशमे क्षिपता राज्ञा शिबिका स्वा वहन् मुनि ।
स्वदुर्वादानुवादेन विज्ञायाशु प्रसादित ॥ १६॥
एव भूताविकारित्वमज्ञसवनयोस्समम् ।
इति सवज्ञतासिद्ध्यै रहूगणकृथेरणम् ॥ १७॥
एकादशेऽथ सम्पृष्टो रहूगणमहीभृता ।
उपादिश पर ज्ञान स योगीति निगद्यते ॥ १८॥
द्वादशे पुनरापृष्टस्स स्नेहेन महीभृता ।
स योगी सवस देहानपानुन्दितायते ॥ १९॥
त्रयोदशे विरक्ताय वृथा तत्त्वनिरूपणम् ।
इति वैराग्यदार्ढ्याय भवाटव्युपवर्ण्यते ॥ २०॥
चतुर्दशे भवारण्यरूपकत्वाकृति कृता ।
प्रस्तुते दस्युगोमायुमशकाद्यवकल्पनै ॥ २१॥
एवमष्टभिरध्यायैर्भरतस्योक्तमीहितम् ।
तत पञ्चदशे तस्य कीर्त्यते वशजा नृपा ॥ २२॥
पूर्वोक्तद्वीपसिंध्वादिमानचिह्नस्वरूपत ।
स्पष्ट प्रवक्तुमारब्धा पञ्चाध्यायी ह्यत परम् ॥ २३॥
षोडशेऽधस्तथाचोर्ध्वं परितस्सन्निवेशत ।
मेरो स्थितिमहीकञ्जकर्णिका चोपवर्ण्यते ॥ २४॥

प्रियव्रतचरित्रोक्ता सप्तद्वीपादिकल्पना ।
तद्विशेषविजिज्ञासु कथा ते परिपृच्छति ॥ २५॥
ततस्सप्तदशे गङ्गागमनं तच्चतुर्दिशम् ।
इलावृते च रुद्रेण सङ्कर्षणनिषेवनम् ॥ २६॥
अष्टादशे ततो मेरोः पूर्वादिक्रमतस्त्रिषु ।
त्रिषु चोत्तरवर्षेषु सेव्यसेवकवर्णनम् ॥ २७॥
ऊनविंशे किंपुरुषे भारते चोपवर्ण्यते ।
सेव्यसेवकभावश्च भारतश्रैष्ठ्यमेव च ॥ २८॥
विंशे प्लक्षादिषड्द्वीपस्थितिमाह सहार्णवैः ।
लोकालोकस्थितिं चा तद्विभागादिमानतः ॥ २९॥
एवमध्यायविंशत्या भूमर्यादा निरूपिता ।
अत परं सुमर्यादापालनं त्रिभिरुच्यते ॥ ३०॥
एकविंशे रवेः कालचक्रेण भ्रमतोऽ वहम् ।
स्वगत्या राशिसञ्चारैर्लोकयात्रा निरूप्यते ॥ ३१॥
द्वाविंशे सोमशुक्रादिस्थानमाहोत्तरोत्तरम् ।
तत्तद्गत्यनुसारेण विश्वानिष्टं तथा नृणाम् ॥ ३२॥
त्रयोविंशे ध्रुवस्थानं ज्योतिश्चक्राश्रयं ततः ।
शिंशुमारस्वरूपेण हरेश्च स्थितिरुच्यते ॥ ३३॥
एवं त्रिभिः सुमर्यादापालनं वर्णितं तथा ।
अधोभुवनमर्यादापालनं त्रिभिरुच्यते ॥ ३४॥

चतुर्विंशे रवेरधास्त्वभावादिस्थितिः क्रमात् ।
अतलादिबिलस्वर्गमर्यादास्सप्त वर्णिताः ॥ ३५॥
पञ्चविंशे ततोऽधस्तादाह शेषस्य संस्थितिम् ।
सञ्जिहीर्षोर्हरेर्यन्ते काले यत्र रुद्रसमुद्भवः ॥ ३६॥
षड्विंशे तु ततोऽधस्तान्नरकस्थितिरुच्यते ।
पापिनो यत्र दह्यन्ते यमदूतैर्यथायथम् ॥ ३७॥

॥ षष्ठस्कन्धे ॥

तत्रादौ प्रथमे विष्णोर्नाम्नैः पातकिमोचनम् ।
तत्प्रापर्यापनायोक्तं यामैर्धर्मादिलक्षणम् ॥ १
द्वितीये वैष्णवैर्याम्यनाममाहात्म्यमद्भुतम् ।
श्रावयित्वा द्विजो निष्णोर्लोकं नाव इतीयते ॥ २
तृतीये तु यमेनापि वैष्णवोत्कर्षवर्णनैः ।
सान्त्वयित्वा स्वदूतास्ते वैष्णवैः किङ्करीकृताः ॥ ३
चतुर्थादित्रिभिर्विश्वरूपनमविवक्षया ।
प्रचेतस्सुतदक्षस्य जन्मस्ताव प्रतन्यते ॥ ४
पञ्चमे नारदेनाथ वाच कूटैस्तु नाशितान् ।
सुतानाकर्ण्य दक्षोऽमुं शशापेति निरूप्यते ॥ ५
षष्ठे दक्षेण पुत्रीया कन्या षष्ट्या प्रकाशिता ।
पृथग्वंशा यतो जातो विश्वरूपोऽदितेस्सुतात् ॥ ६
सप्तमे विश्वरूपोऽसौ पौरोहित्ये वृतस्सुरैः ।

गुरुणा सम्परित्यक्तै पौरोहित्यमथाकरोत् ॥ ७
अष्टमे विश्वरूपस्तु वम नारायणात्मकम् ।
इन्द्राय प्राह येनेन्द्रो गुप्तो दैत्यानथाजयत् ॥ ८
नवमे विश्वरूपे तु हते शक्रेण कोपत ।
त्वष्ट्रा चोत्पादिते वृत्रे भार्तैर्देवैर्हरेस्स्तुति ॥ ९
दशमे केशवादिष्टो दध्यङ्ङस्थिजवज्रभृत् ।
इन्द्रोऽयुध्यत वृत्रेण सोऽप्यनेन विनिर्जित ॥ १०
एकादशे तु वृत्रस्य युध्यमानस्य वज्रिणा ।
भक्तिज्ञानबलोदर्काश्चित्रा वाचस्सुवर्णिता ॥ ११
द्वादशेऽतिविषण्णेन स्वयमुत्साहितेन तु ।
महेन्द्रेण महायुद्धे वृत्रस्य वध इयते ॥ १२
त्रयोदशे तु वृत्रस्य ब्रह्महत्यामहाभयात् ।
चिर नगोऽन्तितश्शक्रो विष्णुनेति निरूप्यते ॥ १३
वृत्रस्य ज्ञानभक्त्यादिश्श्रुत्वा पृष्ट पराक्षिता ।
श्रोतुमाह चतुर्भिस्तत्प्राग्ज मचरिता यत ॥ १४
चतुर्दशे तु सहसा कृच्छ्रल वसुते सृते ।
चित्रकेतोरतिस्नेहादतिशोको निरूप्यते ॥ १५
तत पञ्चदशे चित्रकेतोश्शोकापनोदनम् ।
कृत तत्त्वोपदेशेन नारदेनाङ्गिरोयुजा ॥ १६
षोडशे तत्सुतोक्त्यैव विशोकाकृत्य त नृपम् ।

आदिदेश महाविद्या नारदश्चैवबोधिणीम् ॥ १७
ततस्सप्तदशे योगमहर्षिं प्राप्य स्वे चरन् ।
विहस्य गिरिश शापादुमाया वृत्रता गत ॥ १८
त्वष्टृवशमनुकम्प्य सप्तसङ्ग यथाक्रमम् ।
आनिन्त्यानामथायेषा वशानाह मुनीश्वर ॥ १९
अदिते पञ्चमादाना पुत्राणाम वयोक्तित ।
अष्टादशे दितेर्गर्भे शक्रेण मरुता भिधा ॥ २०
ऊनविंशेऽत्र यत्प्रोक्त कश्यपेन दितेर्व्रतम् ।
तवैव विवृत लोकहिताय परितोषणम् ॥ २१

॥ सप्तमस्कन्धे ॥

तत्र तु प्रथमेऽध्याये हिरण्यकशिपोस्सुते ।
विष्णुभक्ते विरोधस्तु विप्रशापज इयते ॥ १
द्वितीये विष्णुरोषेण लोक विप्रा य दानवै ।
तद्वतभ्रातृपुत्रादीनितिहासैरसा त्वयत् ॥ २
तृतीये तस्य तपसा तप्त वाक्य जगद्विधि ।
आगत्य विस्मितस्तेन सस्तुतस्सवरानदात् ॥ ३
चतुर्थे तु वरान लब्ध्वा जिगीसाखिललोकपान ।
विष्णुद्वेषेण तान् सर्वान दैत्ये द्रसमपीडयत् ॥ ४
पञ्चमे गुरुतोऽधीत त्यक्ता विष्णुस्तुतौ रतम् ।

घातयन् त्रिषसपाद्यैस्सुत दैत्यो नचाशकत् ॥ ५
षष्ठे गुरौ गृहव्यग्रे प्रह्लादो दैत्यबालकान् ।
अनुकम्प्य पर तत्त्व नारदोक्तमुपादिशत् ॥ ६
सप्तमे मातृगर्भस्थ स्वस्मिन्नारदभाषितम् ।
प्रह्लादो वर्णयामास शिष्यप्रत्ययसिद्धये ॥ ७
अत्रापि नारदादेत मया गर्भ इतीरितुम् ।
तत्प्रस्तावकथामाह पद्यैष्षोडशभिस्सुधी ॥ ८
अष्टमेऽतिरुषा सूनु निघ्नन् दैत्यो हतस्स्वयम् ।
आविर्भूय नृसिंहेन स च ब्रह्मादिभिस्स्तुत ॥ ९
अ त कृपासुधापूर्णो बहि क्रोधो नृकेसरी ।
दैत्ये द्रुमरिभावेन भक्त त स्वमपादयत् ॥ १०
नवमे ब्रह्मणा भीत्या चोदितोऽसुरबालक ।
कोप प्रशमयन्नस्तौन्नसिंहमतिभाषणम् ॥ ११
दशमे त्वनुगृह्णासु भक्तमन्तर्हिते हरौ ।
प्रसङ्गाद्धरिणा रुद्रे कृतोऽनुग्रह इयते ॥ १२
तद्वेव दशभिर्ज्ञानभक्तियोगावुदारितौ ।
अथ पञ्चभिरध्यायै कर्मयोगोऽनुवर्ण्यते ॥ १३
एकादशे नृणा धर्मास्साधारण्येन वर्णिता ।
विशेषेण च वर्णाना मुख्यामुख्याश्च योषिताम् ॥ १४
द्वादश वर्ण्यते धर्मो ब्रह्मचारिवनस्थया ।

चतुर्णामाश्रमाणां च साधारण्येन कथ्यन ॥ १५
त्रयोदशे यतेर्धर्मस्साधकस्योच्यते महान् ।
अवधूतेतिहासेन सिद्धावस्था च वर्ण्यते ॥ १६
चतुर्दशे गृहस्थस्य परमो धर्म इष्यते ।
देशकालविभेदेन पुंसश्श्रेयो विशेषकृत् ॥ १७
ततः पञ्चदशे सर्ववर्णाश्रमनिबन्धनम् ।
सारतस्सङ्ग्रहेणाथ वर्ण्यते मोक्षलक्षणम् ॥ १८

## ॥ अष्टमस्कन्धे ॥

तत्र तु प्रथमे स्वायम्भुवस्स्वारोचिषस्तथा ।
उत्तमस्तामसश्चेति चतुर्मनुनिरूपणम् ॥ १
स्वायम्भुवेऽन्तरेऽनन्तदुर तद्गुणवर्णनात् ।
मुदितः परिपप्रच्छ सप्तम न्व तरस्थितिम् ॥ २
तुर्ये मन्वन्तरे प्रोक्तं गजेन्द्रस्य विमोक्षणम् ।
द्वितीयादित्रिभिस्तत्तु विस्तरेणोपवर्ण्यते ॥ ३
द्वितीये तु गजेन्द्रस्य गजीभिः क्रीडतो जले ।
दैवाद्ग्राहगृहीतस्य हरिस्मृतिरुदायते ॥ ४
तृतीयेन गजेन्द्रेण स्तुतो हरिरुपेत्य तम् ।
समुद्दधार ग्राहाच्च ग्राह देवलशापत ॥ ५
चतुर्थे तु तयोर्ग्राह प्राप ग्राभवता पुनः ।

गज स्वपार्षदं कृत्वा हरिर्निन्ये निजं पदम् ॥ ६
अमृताख्यानमष्टाभिरध्यायैरनुवर्ण्यते ।
स्वभक्तपक्षपातेन यत्र योषायित प्रभो ॥ ७
पञ्चमे पञ्चमञ्चाथ षष्ठं चाकथयं मनुम् ।
विप्रशापाच्च निश्श्रीकै कृता देवैर्हरिस्तुति ॥ ८
षष्ठे पुनस्स्तुतिर्विष्णावाविर्भूते सुरै कृता ।
त म त्राब्रासुरैस्साकममृतार्थं महोद्यम ॥ ९
सप्तमे मन्थनोद्भूतविषभीत्याखिलैर्जनै ।
स्तुतस्सन् कृपया रुद्र पपौ विषमितीर्यते ॥ १०
अष्टमे मथ्यमानेऽब्धौ लक्ष्म्या विष्णौ वृतेऽसुरै ।
ध व तरेर्हृते सोमे मोहि युद्धव ईर्यते ॥ ११
नवमे मोहितैर्दैत्यैरर्पितेऽमृतभाजने ।
तद्व्याजेन देवेभ्योऽमृत दत्त तयेर्यते ॥ १२
दशमे मत्सराद्दैत्यैरारब्धे तु मृथे सुरै ।
दैत्यमायाविषण्णेषु देवेष्वाविर्बभौ हरि ॥ १३
तदेवममृतावाप्तिर्नाभक्तानामितीरितम् ।
भक्तमत्सरत प्राणहानि पुनरुदीर्यते ॥ १४
एकादशे तु भगवत्कृपयातिबलोद्धतै ।
अमरैस्समरे दैत्या बलिप्रभृतयो जिता ॥ १५
द्वादशे मोहिनीरूपविभ्रमालोकनोत्सुकम् ।

भव सम्मोहयामास हरि पुनरसा त्वयत् ॥ १६
अमुह्यन्नसुरा विष्णुमायया न तदद्भुतम् ।
इति वक्तु महादेवमोहोऽयमिति वण्यते ॥ १७
त्रयोदशे तु वर्ण्यंते सप्तमादी यनुक्रमान् ।
मन्वन्तराणि सर्वाणि षड्विंशानि पृथक्पृथक् ॥ १८
चतुर्दशे तु सर्वेषा म वादाना यथायथम् ।
पृथक्कर्माणि वर्ण्य ते भगवद्वशवर्तिनाम् ॥ १९
अत्रेयते नवाध्यान्या वाम वामनचेष्टितम् ।
निग्रहाच्छलतो यत्र बलेर्भूपाननुग्रह ॥ २०
बलिं पञ्चदशे विश्वजिताचायाद्ययाजयन् ।
ततोऽसौ स्वर्गमनयद्भयाद्देवा निलिल्यिरे ॥ २१
षोडशे पुत्रनाशेन शोच त्या अदिते पति ।
प्रार्थित कश्यप प्राह पयोव्रतमिहायते ॥ २२
षोडशे कश्यपोऽदित्या प्रार्थितो ज्ञानपुत्रया ।
महच्छ्रेयस्कर तस्यै पयोव्रतमुपादिशत् ॥ २३
ततस्सप्तदशेऽदित्या कृते तस्मिन व्रते हरि ।
तत्कामपूरणायादौ तत्पुत्रोऽभूदितायते ॥ २४
ततस्त्वष्टादशे भूत्वा वामनस्सत्कृतोऽखिलै ।
बलेर्यज्ञगतस्तेन चोक्तो वृणु वरानिति ॥ २५
ऊनविंशे तु हरिणा याचिते च पदत्रयम् ।

प्रतिश्रुते च बलिना जानन् गुरुरवारयत् ॥ २६

स्तुत्वार्थितो भगवता सबलिस्त्रिपदीमिताम् ।
वामनायोनविंशे क्ष्मा दास्यन् शुक्रेण वार्यते ॥ २७

दातुस्स्तुतिस्स्वयतुष्टिरित्यादिप्रस्तुतोचितम् ।
वक्तव्यमिति भिक्षुश्च शिक्षयन्नाह वामन ॥ २८

विंशे गुरूक्तिमुल्लङ्घ्य दत्ता क्ष्मा बलिना हरि ।
प्रतिगृह्याखिलान् लोकान् विश्वरूपो विचक्रमे ॥ २९

विंशेत्वनृतभीतोऽसौ ज्ञात्वापि कपट हरे ।
ददौ पृथ्वीं तदा विष्णुस्सहसावधताद्भुतम् ॥ ३०

एकविंशे पदापूर्तिमिषेण बलिव धनम् ।
विष्णुना कृतमुत्कर्षं तस्य ख्यापयितु जने ॥ ३१

द्वाविंशे तु प्रसन्नस्सन् प्रस्थाप्य सुतल बलिम् ।
दत्वा वरान् हरिर्नून गत्वा तद्द्वारपोऽभवत् ॥ ३२

समर्पिततनूवित्तनिर्मलाचलभक्तिभि ।
चलितो बलिना चित्र स्वमेवापयदच्युत ॥ ३३

त्रयोविंशे बलौ याते सुतल सपितामहे ।
उपेन्द्रेण दिव गत्वा पूर्ववन्मोदते हरि ॥ ३४

चतुर्विंशे भगवत कथा मत्स्यस्वरूपिण ।
विविच्यते यतस्सत्यव्रतरक्षा महार्णवे ॥ ३५

तनु तनु प्रदर्श्यादौ निजैश्वर्यनिदर्शनात् ।
मत्स्य पृच्छति पृथ्वीशो ललया वामनोपमम् ॥ ३६

॥ नवमस्कन्धे ॥

तत्र तु प्रथमेऽध्याये वैवस्वतसुता वये ।
सोम वशप्रवेशोक्त्यै सुद्युम्नस्त्रीत्वमुच्यते ॥ १

द्वितीये मनुपुत्राणा द्वावपुत्रौ विरागत ।
करूशकादिपञ्चाना वशानाह लघुक्रमात् ॥ २

तृतीये मनुपुत्रस्य शर्याते कीर्त्यतेऽ वय ।
यत्र सौकन्यमाख्यान रैवत च महाद्भुतम् ॥ ३

चतुर्थे मनुपुत्रस्य नाभागस्य कथोच्यते ।
तत्सूनोश्चाम्बरीषस्य कृत्या प्रतिहता यत ॥ ४

पञ्चमे विष्णुचक्र तु प्रसाय प्राणसङ्कटात् ।
दुर्वासा विक्षतस्तेन यथा तद्वृत्तमीयते ॥ ५

षष्ठारम्भेऽम्बरीषस्य वशमुक्त्वा तत परम् ।
षष्ठाद्यष्टभिरध्यायैरिक्ष्वाकोर्वंश उच्यते ॥ ६

तत्र षष्ठे शशादादिमान्धात्र वो निरूप्यते ।
प्रसङ्गात्सौभरेराख्या मान्धातृतनयापतेः ॥ ७

मान्धातुरन्वय प्रोक्तस्सप्तमे यत्र गीयते ।
पुरुकुत्सस्य चाख्यान हरिश्च द्रस्य चोत्तमम् ॥ ८

अष्टमे रोहितस्योक्तो वंशो यत्राभवन्नृप ।
सगर कपिलाक्षेपाग्निर्दग्धा यस्य सूनव ॥ ९

नवमेऽशुमतो वंश खट्वाङ्गावधि वर्ण्यते ।
गङ्गा भूतलमानिन्ये यस्य पौत्रो भगीरथ ॥ १०

दशमे प्राह खट्वाङ्गवंशे श्रीरामसम्भवम् ।
तच्चरित्रं च लङ्केशं हत्वाऽयोध्यागमावधि ॥ ११

दशमे रामचरितमाविर्भावपुरस्सरम् ।
शुकेन वर्ण्यते पुण्यमभिषेकोत्सवावधि ॥ १२

ततश्चैकादशेऽयोध्यामावसन्ननुजैसह ।
यज्ञादि यज्ञकारेशो रामस्तदनुवर्ण्यते ॥ १३

रामएकादशे यज्ञैरीजे राष्ट्रेष्ववासयत् ।
कुशादीन् वृत्तिरुदिता प्रजाना राघवस्य च ॥ १४

द्वादशे रामपुत्रस्य कुशस्यान्वय उच्यते ।
एवमिक्ष्वाकुपुत्रस्य शशादस्येरितोऽन्वय ॥ १५

आरभ्याह्वकुशम्भूपानैक्ष्वाकान द्वादशेगतान् ।
भविष्यतस्सुमित्रान्तान् बृहद्रथमुखास्तथा ॥ १६

इक्ष्वाकोरन पुत्रस्य निमेर्वंशस्त्रयोदशे ।
वर्ण्यते जज्ञिरे यत्र ब्रह्मज्ञा जनकादय ॥ १७

त्रयोदशेऽरिषड्वर्गजयीराजा ववायकृत् ।
ऐक्ष्वाकस्य निमेर्देहान्मथिताज्जनकोऽभवत् ॥ १८

चतुर्दशे गुरोः पत्न्या ताराया सोमजाद्बुधात् ।
जातश्चैलश्वदूर्वश्यामायुमुख्यानजीजनत् ॥ १९

चतुर्दशे त्रिजात्सोमाद्गुरोः पत्न्या बुधोऽजनि ।
स उपास्तोर्वशीं तज्ञस्ससङ्केव पुरूरवाः ॥ २०

ततः पञ्चदशे गाधिरैलपुत्रान्वयेऽजनि ।
यद्दौहित्रसुतो रामः कार्तवीर्यमहान् रुषा ॥ २१

उक्ता पञ्चदशे वंशाश्रुतायुः प्रमुखोत्थिताः ।
अर्जुनं गाधिजापौत्रो रामो ह तेतिचेरितम् ॥ २२

षोडशे चार्जुनसुतैर्जमदग्नौ हते मुहुः ।
रामात् क्षत्रवधः प्रोक्तो विश्वामित्रस्य चान्वयः ॥ २३

सीताश्चयदन प्रसह्यातॄन् रामोऽहन् षोडशे नृपान् ।
गाधेः पुत्रोऽभवत्पुत्रस्तद्वंशोऽभूदनेकशः ॥ २४

अथो सप्तदशे त्वैळ ज्येष्ठपुत्रस्य पञ्चसु ।
सुतेषु तत्र वृद्धाधिचतुर्णां वंशवर्णनम् ॥ २५

वंशान् सप्तदशेऽवादीदैळ ज्येष्ठसुतायुषः ।
पुत्रैरम्भरजिक्षत्रवृद्धानेनोभिराहितान् ॥ २६

अष्टादशे ययातेस्तु नाहुषस्य कथोच्यते ।
यस्य पञ्चसु पुत्रेषु कनीयान्ग्रहीज्जराम् ॥ २७

आयुषो ज्येष्ठपुत्रस्य नहुषस्याग्रजस्सुतः ।
ययातिः पूरुमकृताष्टादशे नृपमात्मजम् ॥ २८

ऊनविंशे ययातिस्त्व चेष्टित नवजोपमम् ।
देवयानीं समाश्राव्य विरक्तो मुक्तिमाप्तवान् ॥ २९
भुक्तभोगामजा हास्यन्ननवद्वृत्तिमात्मन ।
विडम्बयी प्रयामाह निर्वेदयितुमात्मवान ॥ ३०
विंशे पितृप्रसादात्पुरराजासनमहोन्नते ।
पूरोर्वंशे तु दौष्य तेभरतस्येर्यते यश ॥ ३१
एकविंशे तु दौष्य तेस्सुतस्या वय उच्यते ।
रन्तिदेवाजमाढादेयत्र कीर्ति प्रत यते ॥ ३२
एकविंशे भरद्वाजपुत्रमन्युसुता वय ।
वण्य ते रन्तिदेवाजमीढाद्या यत्र वंशिन ॥ ३३
द्वाविंशे तु दिवोदासवंशमुक्त्वाथ वर्णिता ।
ऋक्षवंशे जरास घपार्थदुर्योधनादय ॥ ३४
दिवोदासात्तु पाञ्चालवंशो द्वाविंश उच्यते ।
वंशा तराद्राजमीढचैद्यमागधकौरवा ॥ ३५
त्रयोविंशेऽत्वनोर्द्रुह्योस्तुवसोश्चा वय क्रमात् ।
यदोश्च वंशोऽनुक्ता तो यावज्ज्यामघसम्भवम् ॥ ३६
त्रयोविंशेऽ वयानुक्ता शुकोनुप्रमुखै कृताम् ।
ज्यामघावधिमाचरव्यौ यदोर्वंश महत्तरम् ॥ ३७
चतुर्विंशे विदर्भस्य पुत्रत्रयसमुद्भवा ।
वंशा नानामुखा प्रोक्ता रामकृष्णोद्भवावधि ॥ ३८

॥ दशमस्कन्धे ॥

कृष्णावतारचरितश्रवणामृतनिवृत ।
उक्तानुवादेनौ सुक्याद्राजा पृच्छति तपुन ॥ १
तत्र तु प्रथमे कसस्स्वसु यु देवकीसुतात् ।
श्रुत्वा भातोऽवधीत्तस्याष्षड्गभानिति वण्यते ॥ २
द्वितीये कसघाताय देवक्या गभगो हरि ।
ब्रह्मादिभिस्स्तुतस्ता च सा विततेति निरूप्यते ॥ ३
तृतीये निजरूपेण सम्भूतस्तु हरिस्स्वयम् ।
पितृभ्या सस्तुतो नीत पित्रा भीतेन गोकुलम् ॥ ४
चतुर्थे चण्डिकावाक्यमाकर्ण्यातिभयाकुल ।
तुर्मे यभिहित मेने कसो बालादिहिंसनम् ॥ ५
पञ्चमे जातक न दस्तनो कृत्वा महोत्सवम् ।
गत्वा तु मथुरा प्राप वसुदेवागमोत्सवम् ॥ ६
षष्ठे सग्युगिरानन्गे भ्रमन् गच्छन्न मृता पथि ।
दृष्ट्वा तु राक्षसीं तस्या मृत्यु श्रुत्वा स विस्मित ॥ ७
उत्क्षिपन शकट व्योम्नि तृणावतमधिक्षिपन ।
दर्शयाति वमास्ये च कृष्ण क्रीडति सप्तमे ॥ ८
अष्टमे नामकमास्य बालक्रीडा कुतूहले ।
मृद्भक्षणादियोगे च विश्वरूप निरूप्यते ॥ ९
विश्वरूपादि बालस्य निशम्याशङ्कित पितु ।

नामकृद्गर्गवाक्येन नि तत्त्वमसूचयत् ॥ १०
नवमे पयउत्सिक्ते ग वा गोप्यथ तत्कृतम् ।
विलोक्य भाण्डभङ्गादि कृष्ण दाम्ना बब व तम् ॥ ११
तत्तूदराश्रित विश्व दृष्ट्वा विस्मितचेतस ।
थ धनञ्जकुञ्जापूता पूणतासाऽ वदशयत् ॥ १२
दशमेऽपातयद्राजन्न तरा यमळार्जुनौ ।
सत्र ताभ्या च देवाभ्या कृष्णस्तुत इतायते ॥ १३
एकादश समागम्य वृन्दावनमथासकै ।
वत्सा पालयतानेन हतौ वत्सबकासुरौ ॥ १४
द्वादशे तु महासपवपुधरमघासुरम् ।
वत्सपालगाळ क्रुद्धो गतेऽहन्निति वण्यते ॥ १५
महानकगळकाडा कवलस्य न कौतुकम् ।
इतीवाघासुरमुखे ससख प्राविशद्धरि ॥ १६
त्रयोदशे हरिब्रह्मा वत्सा पालाश्च मायया ।
हृता तत्स्वरूपोऽब्द कृष्ण पूववदाचरत् ॥ १७
चतुदशेऽद्भुत दृष्ट्वाऽपूर्वाग तुकनिश्चयम् ।
अनीश कतुमस्तौषीत्कृष्ण ब्रह्मातिमोहित ॥ १८
तत पञ्चदशे धेनुपालन धेनुकादनम् ।
कालीयक्ष्वेळतो गोपरक्षण च निरूप्यते ॥ १९
षोडशे कालियस्योक्तो निग्रहो यमुनाह्रदे ।

तत्पत्नीभिस्स्तुतेनाथ कृष्णेनानुग्रहः पुनः ॥ २०
नागः सप्तदशे नागालयं तं निरयासयत् ।
वधूश्च सखिनश्चा तान् सुप्तांस्तत्र दवादपात् ॥ २१
अष्टादशे ततो ग्रीष्मे वसन्तगुणलक्षिते ।
अघातयद्बलेनालं प्रलम्बं लीलया हरिः ॥ २२
ऊनविंशे निविष्टं तु गोपगोकुलमच्युतः ।
मुञ्जारण्यमरण्याग्नेररक्षत्तमपानतः ॥ २३
विंशे प्रावृट्शरच्छोभावर्णनेन वनोचिता ।
प्रावृट्क्रीडा निरूप्य ते गोपरामयुतो हरे ॥ २४
एकविंशे शरद्रम्यवृन्दावनगते हरौ ।
तद्वेणुस्वनमाकर्ण्य गोपाभिर्गीतमायते ॥ २५
द्वाविंशे गोपकन्यानां वस्त्राहरणलीलया ।
वरदं वा गतः कृष्णो यज्ञशालामितीर्यते ॥ २६
त्रयोविंशे ततो गोपैरन्नयाच्ञापदेशतः ।
तत्पत्नीरनुगृह्णात्कृष्णो दीक्षितानन्वतापयत् ॥ २७
चतुर्विंशे मखे द्रव्य मरा व्यावर्त्य हेतुभिः ।
कृष्णः प्रावर्तयामास गोवर्धनमहोत्सवम् ॥ २८
पञ्चविंशे रुषा शक्रे व्रजनाशाय वर्षति ।
उद्धृत्य गिरिमासारादरक्षद्गोकुलं प्रभुः ॥ २९
षड्विंशे विस्मिता गोपाः कृष्णस्याद्भुतकर्मभिः ।

न दो गर्गोक्तिमाशक्य तदैश्वर्यमवर्णयत् ॥ ३०
सप्तविंशे तदालक्ष्य कृष्णस्य प्राभव परम् ।
वर्ण्यते सुरभी द्वाभ्यामभिषेकमहोत्सव ॥ ३१
अष्टाविंशे ततो न दानयन वरुणालयात् ।
वैकुण्ठदर्शन चापि गोपानामनुवर्ण्यते ॥ ३२
ऊनत्रिंशे तु रासार्थमुक्तिप्र युक्त्यो हरे ।
गोपाभीरासंरम्भे तस्य चा तर्धिकौतुकम् ॥ ३३
त्रिंशे विरहसन्तप्तगोपाभि कृष्णमार्गणम् ।
उन्मत्तवत्र नियत भ्रमतीभिर्वने वने ॥ ३४
एकत्रिंशे निशाया ता पुन पुलिनमागता ।
कृष्णमेवानुगाय त्य प्रायय ते तदागमम् ॥ ३५
द्वात्रिंशे विरहालापविक्लिन्नहृदयो हरि ।
तत्राविर्भूय गोपीस्तास्सा त्वयामास मानयन् ॥ ३६
त्रयस्त्रिंशे ततो गोपामण्डलीमध्यगो हरि ।
प्रियास्ता रमयामास ह्लादिनी वनकेलिभि ॥ ३७
चतुस्त्रिंशेऽहिनागस्त न द हरिरमूमुचत् ।
विद्याधराङ्गिरश्शापाच्छङ्खचूड तथावधात् ॥ ३८
पञ्चत्रिंशे वन याते कृष्णे गोकुलयोषित ।
युग्मश्लोकानुगीतेन नि युदु खेन वासरान् ॥ ३९
षट्त्रिंशे निहतेऽरिष्टे नारदोक्त्या बलाच्युतौ ।

वसुदेवसुतौ ज्ञात्वा कंसोऽक्रूरं समादिशत् ॥ ४०
सप्तत्रिंशे हते केशि यच्युता भाविकमभि ।
नारदेन स्तुत क्रीडन् व्योमासुरमथावधीत् ॥ ४१
अष्टत्रिंशे यथाध्यायमक्रूरो गोकुलं गत ।
तथैव रामकृष्णाभ्यां गृहं नीत्वा सुसत्कृत ॥ ४२
प्रात केशिवधे वृत्ते द्वादश्यां निगते मुनौ ।
ततो व्योमे हतेऽक्रूरस्साय गोकुलमागमत् ॥ ४३
नवत्रिंशे पुरीं गच्छत्यच्युते गोपिकोत्तय ।
अक्रूरेणाथ कालिन्द्यां विष्णुलोकस्य दर्शनम् ॥ ४४
चत्वारिंशे ततोऽक्रूर कृष्णं मत्वेश्वरेश्वरम् ।
प्रणम्य भक्त्या तुष्टाव सगुणागुणभेदत ॥ ४५
एकचत्वारिंशकेऽहन रजकं प्रविश्य पुरीम् ।
ततो वरानदात्तुष्टस्सुदाम्नो वायकस्य च ॥ ४६
द्विचत्वारिंशके कुब्जोऽभमन धनुषो भिदा ।
वधस्तद्रक्षिणां कंसारिष्टरङ्गोत्सवानि च ॥ ४७
त्रिचत्वारिंशके हत्वा गजे द्र रामकृष्णयो ।
रङ्गप्रवेशसौभाग्यं चाणूरेणानुभाषणम् ॥ ४८
चतुश्चत्वारिंशके तु मल्लकंसादिमर्दनम् ।
कंसयोषित आश्वासस्ताभ्यां पित्रोश्च दर्शनम् ॥ ४९
पञ्चचत्वारिंशकेऽथ पितृन दादिसा त्वनम् ।

उग्रसेनाभिषेकश्च गुरौ वासात्पुरागमः ॥ ५०
षट्चत्वारिंशके घोषमुद्धवं प्रेष्य तद्गिरा ।
यशोदानन्दयोश्चक्रे कृष्णश्शोकापनोदनम् ॥ ५१
कामचारं द्विचत्वारिंश परित्यज्याति सयत ।
गुरोर्ज्ञानमनुप्राप्य सख्या गोपानुपादिशत् ॥ ५२
सप्तचत्वारिंशकेऽथ कृष्णादेशेन गोपिकाः ।
बोधयित्वोद्धवस्तत्रमनुज्ञा यागम पुरीम् ॥ ५३
अष्टचत्वारिंशकेऽथ कृष्ण कुब्जामरारमत् ।
अक्रूरस्य गृहं गत्वा स गजाह्वयमादिशत् ॥ ५४
सैरन्ध्रिकाममापूर्य पूरयित्वा मनोरथान् ।
अक्रूरस्य ततः कृष्णस्तेन पाण्डवानसान्त्वयत् ॥ ५५
ऊनपञ्चाशत्तमे तु गत्वा क्रूरो गजाह्वयम् ।
राज्ञस्स्वभ्रातृपुत्रेषु बुद्ध्वा वैषम्यमागमत् ॥ ५६
ततः पञ्चाशत्तमे तु जरासन्धभयादिव ।
कारयित्वाम्बुधौ दुर्गं स निनाय निजं जनम् ॥ ५७
कपटान् कपटेनैव हत्वा दैत्यानयन्नत ।
अजयत्त जरासन्धं धर्मेणैव तु धार्मिकम् ॥ ५८
एकपञ्चाशत्तमेऽहन् मुचुकुन्ददृशा हरिः ।
यवनं मुचुकुन्देन स्तुतस्तन्नान्वकम्पत ॥ ५९
यवने द्रसुतात्कालयवनाद्द्भीषणात् ।

वसुदेवसुतौ ज्ञात्वा कसोऽक्रूर समादिशत् ॥ ४०
सप्तत्रिंशे हते केशि यच्युतो भाविकमभि ।
नारदेन स्तुत क्रीडन् व्योमासुरमथावधीत् ॥ ४१
अष्टत्रिंशे यथाऽध्यायन्नक्रूरो गोकुल गत ।
तथैव रामकृष्णाभ्या गृह नीत्वा सुसत्कृत ॥ ४२
प्रात केशिवधे वृत्ते द्वादश्या निर्गते मुनौ ।
ततो व्योमे हतेऽक्रूरस्साय गोकुलमागमत् ॥ ४३
नवत्रिंशे पुरीं गच्छत्यच्युते गोपिकोत्कय ।
अक्रूरेणाथ कालिन्द्या विष्णुलोकस्य दर्शनम् ॥ ४४
चत्वारिंशे ततोऽक्रूर कृष्ण मत्वेश्वरेश्वरम् ।
प्रणम्य भक्त्या तुष्टाव सगुणागुणभेदत ॥ ४५
एकचत्वारिंशकेऽहन् रजक प्रविश्य पुरीम् ।
ततो वरानदात्तुष्टस्सुदाम्नो वायकस्य च ॥ ४६
द्विचत्वारिंशके कुब्जोऽन्नमन्न धनुषो भिदा ।
वधस्तद्रक्षिणा कसारिष्टरङ्गोत्सवानि च ॥ ४७
त्रिचत्वरिंशके हत्वा गजे द्व रामकृष्णया ।
रङ्गप्रवेशसौभाग्य चाणूरेणानुभाषणम् ॥ ४८
चतुश्चत्वारिंशके तु मल्लकसादिमर्दनम् ।
कसयोषित आश्वासस्ताभ्या पित्रोश्च दर्शनम् ॥ ४९
पञ्चचत्वारिंशकेऽथ पित्रून दादिसा त्वनम् ।

उग्रसेनाभिषेकश्च गुरौ वासात्पुरागम ॥ ५०

षट्चत्वारिंशके घोषमुद्धव प्रेष्य तद्गिरा ।
यशोदानन्दयोश्चक्रे कृष्णश्शोकापनोदनम् ॥ ५१

कामचार द्विचातिस्सन्न परित्य यातिसयत ।
गुरोर्ज्ञानमनुप्राप्य सख्या गोपारुपाश्लिशम् ॥ ५२

सप्तचत्वारिंशकेऽथ कृष्णादेशेन गोपिका ।
बोधयित्वोद्धवस्तत्रमनुज्ञा यागम पुराम् ॥ ५३

अष्टचत्वारिंशकेऽत्र कृष्ण कु नामरारमत् ।
अक्रूरस्य गृह ग त्वा त गजाह्वयमान्शित् ॥ ५४

सैरन्ध्रिकाममापूय पूरयित्वा मनोरथान् ।
अक्रूरस्य तत कृष्णस्तेन पाथानसात्वयत् ॥ ५५

ऊनपञ्चाशत्तमे तु गत्वा क्रूरो गनाह्वयम् ।
राजस्त्वभ्रातृपुत्रेपु बुद्धा वैषम्यमागमत् ॥ ५६

तत पञ्चाशत्तमे तु नरास भयादिव ।
कारयित्वाम्बुधौ दुर्गं त निनाय निज जनम् ॥ ५७

कपटान् कपटेनैव हत्वा दैत्यानयत्नत ।
अजयत्त नरास ध धर्मेणैव तु धार्मिकम् ॥ ५८

एकपञ्चाशत्तमेऽह्नन् मुचुकुन्द दृशा हरि ।
यवन मुचुकुन्देन स्तुतस्सन्न न्वकम्पत ॥ ५९

यवनेन्द्रसुतात्कालयवनाद्धुभीषणात् ।

वसुदेवसुतौ ज्ञात्वा कंसोऽक्रूरं समादिशत् ॥ ४०
सप्तत्रिंशे हते केशि यच्युतो भाविकर्मभि ।
नारदेन स्तुत क्रीडन् व्योमासुरमथावधीत् ॥ ४१
अष्टत्रिंशे यथाध्यायमक्रूरो गोकुलं गत ।
तथैव रामकृष्णाभ्यां गृहं नीत्वा सुसत्कृत ॥ ४२
प्रात केशिवधे वृत्ते द्वादश्यां निर्गते मुनौ ।
ततो व्योमे हतेऽक्रूरस्सायं गोकुलमागमत् ॥ ४३
नवत्रिंशे पुरीं गच्छत्यच्युते गोपिकोत्कय ।
अक्रूरेणाथ कालिन्द्यां विष्णुलोकस्य दर्शनम् ॥ ४४
चत्वारिंशे ततोऽक्रूर कृष्णं मल्लेश्वरेश्वरम् ।
प्रणम्य भक्त्या तुष्टाव सगुणागुणभेदत ॥ ४५
एकचत्वारिंशकेऽहन् रजकं प्रविश्य पुरीम् ।
ततो वरानदात्तुष्टस्सुदाम्नो वायकस्य च ॥ ४६
द्विचत्वारिंशके कुब्जोऽनमन धनुषा भिदा ।
यवस्तद्रक्षिणा कंसारिष्टरङ्गोत्सवानि च ॥ ४७
त्रिचत्वरिंशके हत्वा गजे द्र रामकृष्णयोः ।
रङ्गप्रवेशसौभाग्य चाणूरेणानुभाषणम् ॥ ४८
चतुश्चत्वारिंशके तु मल्लकंसादिमर्दनम् ।
कंसयोषित आश्वासस्ताभ्यां पित्रोश्च दर्शनम् ॥ ४९
पञ्चचत्वारिंशकेऽथ पितृन दादिसा त्वनम् ।

उग्रसेनाभिषेकश्च गुरौ वासात्पुरागम ॥ ५०
षट्चत्वारिंशके घोषमुद्धव प्रेष्य तद्गिरा ।
यशोदान दयोश्चक्रे कृष्णश्शोकापनोदनम् ॥ ५१
कामचार द्विजातिस्सन्न परित्य यातिमयत ।
गुरोर्ज्ञानमनुप्रा य सख्या गोपीरुपाविशन् ॥ ५२
सप्तच वारिंशकेऽथ कृष्णादेशेन गोपिका ।
बोधयित्वोद्धवस्तत्त्वमनुज्ञाप्यागम पुराम् ॥ ५३
अष्टचत्वारिंशकेऽथ कृष्ण कु नामरीरमत् ।
अक्रूरस्य गृह गत्वा त गजाह्वयमाप्शित् ॥ ५४
सैरंध्रिकाममापूय पूरयित्वा मनोरथान ।
अक्रूरस्य तत कृष्णस्तेन पाण्डवानसान्त्वयत् ॥ ५५
ऊनपञ्चाशत्तमे तु गत्वा क्रूरो गजाह्वयम् ।
राज्ञस्स्वभ्रातृपुत्रेषु बुद्ध्वा वैषम्यमागमत् ॥ ५६
तत पञ्चाशत्तमे तु नरास वभयादिव ।
कारयित्वाम्बुधौ दुर्गं त निनाय निज जनम् ॥ ५७
कपटान कपटेनैव हत्वा दैत्यानयवत ।
अजयत्त नरास ध धर्मेणैव तु धार्मिकम् ॥ ५८
एकपञ्चाशत्तमेऽहन् मुचुकु ददृशा हरि ।
यवन मुचुकुन्देन स्तुतस्सन्न वकम्पत ॥ ५९
यवनेऽप्रसुतात्कालयवनाद्यद्भीषणात् ।

हरिर्हरगिरस्स्वैर पालनायापलायत ॥ ६०
द्विपञ्चाशत्तमे धाव भयादिव गत पुरीम् ।
अ वमोदत स देश रुक्मिण्या द्विजवर्णितम् ॥ ६१
त्रिपञ्चाशत्तमे गत्वा विदभानद्भुते हित ।
रुक्मिणीमाहरत्कृष्णो मिषता द्विषता बलात् ॥ ६२
चतु पञ्चाशत्तमे तु जित्वा राज्ञा विपक्षगान् ।
रुक्मिण च विरूप्याथ भैष्म्या पाणिं पुरोऽग्रहीत् ॥ ६३
पञ्चपञ्चाशत्तमे तु प्रद्युम्नोऽजनि कृष्णत ।
शम्बरेण हृतस्सोऽथ हत्वा त का तयागमत् ॥ ६४
प्रद्युम्नहानिलाभाद्यैश्शम्बराहरणादिना ।
कुटुम्बिनामपत्यादि सुखदु खमसूचयत् ॥ ६५
षट्पञ्चाशत्तमे मिथ्याभियोगे मणिमाहरत् ।
कन्या जाम्बवत प्राप कृष्णस्सत्राजितस्तत ॥ ६६
पुत्रादिकामसौख्यस्य निष्ठा मुक्तातिचञ्चलम् ।
अथस्यानर्थतामाह स्यम ताहरणादिना ॥ ६७
सप्तपञ्चाशत्तमे तु पुनश्शतधनोर्वधे ।
प्राप्त स्वदुयशो मार्ष्टि कृष्णोऽक्रूरागता मणे ॥ ६८
अक्रूरसुरीकृत्य मणे पानमथाच्युत ।
उपामन्त्य तमेका ते सरामोऽगाद्गनाह्वयम् ॥ ६९
अष्टपञ्चाशत्तमे तु कृष्ण पञ्चकरेऽग्रहीत् ।

काठि दीं मित्रवि दा च सत्या भद्रा च लक्ष्मणाम् ॥ ७०
काळि दीं निजलाभाय तप परमुपेयुषीम् ।
उपनेष्यन् प्रियावासमि द्रप्रस्थमथागमत् ॥ ७१
ऊनषष्टितमे भौम हत्वा तेनाहृतो हरि ।
क यासहस्रश प्राप्य पारिजात ततोऽहरत् ॥ ७२
परिणीय ततस्ताभिस्त मनोरथपूरणै ।
आत्मारामोऽप्यसौ रेमे तद्गृहेषु गृहस्थवत् ॥ ७३
अथ षष्टितमे कृष्ण परिहासेन रुक्मिणाम् ।
कोपयित्वा तत प्रेम कलहो तामसा त्वयत् ॥ ७४
रामारामजनान वमहाद्यविडम्बनै ।
रुक्मिण्या प्रेमकलहच्छद्मनैश्वयमीयते ॥ ७५
एकषष्टितमे शौरे पुत्रपौत्रादिस तति ।
अनिरुद्धविवाहे च रुक्मिणो रामतो वध ॥ ७६
अष्टाधिकशतव्यग्सहस्रस्त्रीसमुद्भवान ।
कोटिश पुत्रपौत्रादीन हरिदारैरयोजयत् ॥ ७७
द्वियुकषष्टितमे प्रोक्तमनिरुद्धस्य रोधनम् ।
क यया रममाणस्य बाणेन बहुबाहुना ॥ ७८
त्रियुक्षष्टितमे चाथ बाणयादवसङ्गरे ।
स्तुति वरेणेश्वरेण बाणबाहुभिदो हरे ॥ ७९
श्रीकृष्णश्श्रीहर जित्वा बाणबाहूनथाच्छिनत् ।

चतुर्बाहु विमुञ्चेम देवदेव दयानिधे ॥ ८०
इति सम्प्रार्थितस्तेन रुद्रेण प्रीतमानस ।
प्रह्लादाय वरो दत्त पुरा वध्योऽसुरो मया ॥ ८१
चत्वारोऽस्य भुजाश्छिन्ना भविष्यत्यजरामर ।
पार्षदोऽय भवतु ते हरेत्युक्त्वा ससर्ज तम् ॥ ८२
चतुष्षष्टितमे कृष्णो नृग शापान्मोचयत् ॥
ब्रह्मस्वहारिदोषोक्त्या राज्ञो ह्यन्वशिक्षयत् ॥ ८३
विभूतिभोगभाग्यादिमदोद्धतमनोरथान् ।
अन्वशासन्नृपान् कृष्ण नृगोद्धारप्रसङ्गत ॥ ८४
पञ्चषष्टितमे रामश्चक्रे गोकुलमागत ।
रममाणस्तु गोपीभि कालिन्द्या कर्षण मुदा ॥ ८५
रामस्य चरित चित्र कालिन्द्याकर्षणादि यत् ।
पौण्ड्रका तादिकृष्णस्य पृथगुक्त तत परम् ॥ ८६
षड्ग्यष्षष्टितमे काशीं गत्वाहन् पौण्ड्रक हरि ।
तन्मित्र च ततो वृत्त सुदक्षिणमथादिशत् ॥ ८७
सप्तषष्टितमे रामो गिरौ रैवतके मदात् ।
स्वैर युवतिभि क्रीडन्नवधीद्द्विविद बल ॥ ८८
अष्टषष्टितमे साम्बे निबद्धे कौरवैर्युधि ।
तद्विमोक्षाय रामेण द्विजाह्वयविकर्षणम् ॥ ८९
एकोनसप्ततितमे गाहर थ प्रतिमा दरम् ।

कृष्णस्य नारदो दृष्ट्वा विस्मितोऽगात्ततस्तुवन् ॥ ९०
ततस्तु सप्ततितमे कृष्णस्याह्निककर्मणि ।
दूतनारदयो कार्ये मन्त्रिम त्रविचारणम् ॥ ९१
नग मङ्गळचारित्रमाह्निक जगदीशितु ।
नारदेन कचित्किञ्चिन् दृष्टमाह यथाक्रमम् ॥ ९२
अ्रेकसप्ततितमे ह्युद्धवस्य तु म त्रत ।
इ द्रप्रस्थ गते कृष्णे पाथाना परमोत्सव ॥ ९३
राजसूयमिष कृत्वा भीमदुर्योधनादिषु ।
कलिमुत्पाद्य तद्द्वारा भूभारमहरत्प्रभु ॥ ९४
ततो द्विसप्ततितमे राज्ञा कार्ये निवेदिते ।
दुर्जय मागध बुद्ध्वा भीमेनाघातयद्धरि ॥ ९५
ततस्त्रिसप्ततितमे मोचयित्वा नृपान् हरि ।
राजाह्भोगैस्स्वा देशान् प्रस्थाप्य पुनराह्वरत् ॥ ९६
अत्युग्रजरास धवधात्तद्बद्धभूपतीन् ।
विमोच्य कृपया कृष्णो निजरूपमदर्शयत् ॥ ९७
चतुर्युक्सप्ततितमे राजसूयक्रियाद्विजै ।
अग्रपूजाप्रसङ्गेन चैद्यघातात्र वर्ण्यते ॥ ९८
राजसूयमुखे हत्वा जरास ध तद तरे ।
चैद्य तद ते कुर्व त बीज कलिमिवावपत् ॥ ९९
पञ्चयुक्सप्ततितमे यज्ञावभृथसम्भ्रम ।

सुयोधनस्य चाक्षा त्या मानभङ्गो द्विशिक्रमात् ॥ १००
ततष्षट्सप्ततितमे वृष्णिसाल्वमहामृधे ।
द्युमद्गदाप्रहारेण रणात्प्रद्युम्ननिर्गम ॥ १०१
सम्पाद्य धर्मराजस्य राजसूयमहोदयम् ।
निहत्य सौभराजादीनयोपारमदच्युत ॥ १०२
सप्तयुक्सप्ततितमे नानामायाविचक्षण ।
कृष्णेनागत्य साल्वस्तु हतस्सौभ च चूर्णितम् ॥ १०३
ततोऽष्टसप्ततितमे द तवक्त्रविदूरथौ ।
हत्वा हरि पुरे रेमे रामस्सूत ततोऽवधात् ॥ १०४
ऊनाशीतितमे राम पल्वल द्विजतुष्टये ।
निहत्य तीर्थस्नानार्थैस्सूतहत्यामपानुदत् ॥ १०५
तथाशीतितमे कृष्णश्श्रीदामान गृहागतम् ।
सम्पूज्यापृच्छदर्थेस्तु गुरुवासकथा मुदा ॥ १०६
एकाशीतितमे स्वर्युर्जेश्वा पृथुकतण्डुलान् ।
श्रिय निर्मितवानि द्रदुर्लभा तु वदाश्रम ॥ १०७
द्व्यशीतितम आगत्य कुरुक्षेत्र रविग्रहे ।
वृष्णीन् दृष्ट्वा मुदा भूपाश्चक्रु कृष्णकथा मिथ ॥ १०८
श्रीकामसुहृदे कृष्ण प्रकल्प्येन्द्रपट मुवि ।
नन्दादिसुहृदान द कुरुक्षेत्र जगाम स ॥ १०९
त्र्यशीतितम एव च स्त्रीणा कृष्णकथोत्सवे ।

द्रौपद्यै कृष्णभार्याभिस्स्वकास्त्वम्बकरन्ध्रा ॥ ११०
चतुर्भिरधिकेशातितमे मुनिसमागमे ।
वसुदेवमुखोत्साहव धुभस्थापनादिकम् ॥ १११
पञ्चाशीतितमे रामकृष्णौ सम्प्रार्थितौ स्तुतौ ।
पित्रे ज्ञानमथो मात्रे मृता पुत्रानयच्छताम् ॥ ११२
न श्यित्वा कुरुक्षेत्रे यात्राया सुहृदो बहून् ।
तत्वनान् तत पित्रोरादिश मृतसूनुभि ॥ ११३
षडशीतितमे दम्भात्सुभद्रामर्जुनोऽहरत् ।
गत्वा च मिथिला कृ णो नृपविप्रावन दयत् ॥ ११४
पित्रोस्स्वज्ञानमादिश्य सुभद्रामर्जुनाय च ।
जगाम मिथिला कृष्णस्सभक्तप्रियकृत्तत ॥ ११५
सप्ताशातितमे नारायणनारदवादत ।
वेदैस्स्तुतिर्गुणालब्धा निगुणा च तथोच्यते ॥ ११६
अष्टाशातितमे विष्णुभक्त कैवल्यमश्नुते ।
ततोऽवाग्देवभक्तस्तु विभूतिमिति वर्ण्यते ॥ ११७
नवाशातितम देव को महानिति सशये ।
परीक्ष्य विष्णोरुत्कर्षं मुनिभ्योऽवर्णयद्भृगु ॥ ११८
मृतपुत्र समादाय विप्रोऽरोदद्धरे पुर ।
अर्जुनेन प्रतिज्ञात विप्रपुत्रस्य रक्षणम् ॥ ११९
शिशावदर्शन प्राप्ते फल्गुनेऽग्निसमीपगे ।

सार्जुनो हरिरानाय्य वैकुण्ठात्तत्सुतापणम् ॥ १२०
चरमे तु पुन प्रोक्ता कृष्णलीला समासत ।
यदुवशप्रसूतानामान त्य च सकारणम् ॥ १२१

॥ एकादशस्कन्धे ॥

चत्वैकत्रिंशदध्यायैर्मुक्तिरेकादशे तत ।
जायते चेतिहासाद्यैस्समासव्यासयोगत ॥ १
नारदो वसुदेवाय समासेन यवणयत् ।
भगवानुद्धवायाथ विस्तरेणोपपत्तिभि ॥ २
तत्र तु प्रथमेऽध्याये यदुवशस्य सक्षय ।
उपक्षिप्तो विरागाय मौसल्यव्यपदेशत ॥ ३
प्रवर्तित परान वकृष्णक्रीडानुवर्णिता ।
तन्निवृत्त्या परान दपदारोहोनुवण्यते ॥ ४
द्वितीये निमिजाय तसवान्नेनाह नारद ।
धमा भागवता भक्त्या वसुदेवाय पृच्छते ॥ ५
मायातत्तरणब्रह्मकर्मप्रश्नचतुष्टये ।
तृतीये तूत्तर दत्तमार्षभैर्मुनिभि पृथक् ॥ ६
चतुर्थेत्ववतारेहाप्रश्नस्योत्तरमुक्तवान् ।
जयन्तिन दनो नाम्ना द्रमिळो नवसत्तम ॥ ७
पञ्चमे भक्तिहीनाना का निष्ठा को युगे युगे ।
विष्णो पूजाविधि प्रश्नद्वयस्योत्तरमुच्यते ॥ ८

षष्ठे ब्रह्मादिभिस्स्तुत्वा स तु विज्ञापितः हरिः ।
उद्धवं प्रार्थयामास स्वधाम नय मामिति ॥ ९

सप्तमे तूद्धवज्ञानसिद्ध्यै पृष्टस्त्वथ हरिः ।
अवधूतेतिहासोक्तगुरुष्वप्यावर्णयत् ॥ १०

अष्टमेऽजगरादिभ्यो नवभ्यश्शिक्षितं हरिः ।
अवधूतगिरा प्राह विवेकायोद्धवं प्रति ॥ ११

नवमे कुररादिभ्यो देहतश्चोपशिक्षितम् ।
श्रुत्वा यदुः कृतार्थोऽभूदिति कृष्णेन वर्णितम् ॥ १२

चतुर्विंशतिगुरुभ्यो ह्यसम्भावना भुवः ।
उद्धवस्यात्मतत्वार्थं साधनोक्तिपरेरिता ॥ १३

दशमे देहसम्बन्धान् संसृतिनात्मनस्स्मृता ।
इत्येतद्वर्णयामास मता तरनिवारत ॥ १४

एकादशे तु बद्धानां मुक्तानामपि लक्षणम् ।
साधूनां च तथा भक्तेर्लक्षणं हरिणेरितम् ॥ १५

द्वादशे साधुसङ्गस्य महिमा वर्णितः पुरा ।
कर्मानुष्ठानतत्त्यागव्यवस्था च ततः परम् ॥ १६

त्रयोदशेऽथ सत्त्वस्य वृद्ध्याविद्योदयक्रमं ।
हंसेतिहासतश्चित्तगुणविश्लेषवर्णनम् ॥ १७

चतुर्दशे परं श्रेयो भक्तिरेव नचेतरत् ।
इत्येतद्वर्ण्यते ध्यानयोगश्च सहसा घनैः ॥ १८

तत पञ्चदशे प्रोक्तास्सिद्धयो धारणानुगा ।
श्रीविष्णुपदसम्प्राप्राव तरायतया मता ॥ १९

षोडशे तु हरेराविर्भावयुक्ता विभूतय ।
ज्ञानवीर्यप्रभावादिविशेषेणोपवर्णिता ॥ २०

न वस्तुयोगतापत्यै विभूत्यादिनिरूपणम् ॥ २०॥

ततस्सप्तदशे पृष्टे स्वधर्मे भक्तिलक्षणे ।
इसोक्त धमम वाह् ब्रह्मचारिगृहस्थयो ॥ २१॥

अष्टादशेऽवदद्धर्मं वनस्थयतिगोचरम् ।
अधिकारविशेषेण विशेष चापि तद्गतम ॥ २२॥

ज्ञानादेर्निर्णय पूर्वं कृतो ह्याश्रमधमत ।
एकोनविंशतितमे ज्ञानादेस्त्याग उच्यते ॥ २३॥

ज्ञानिनो वर्ण्यते कमाभाव एकोनविंशके ।
युक्तितकस्वरूपाभ्या नग्ज्ञानस्य सवदा ॥ २४॥

विंशे योगत्रय प्रोक्त भक्तिज्ञानक्रियात्मकम् ।
गुणदोषव्यवस्थार्थमधिकारिविभागत ॥ २५॥

एकविंशे क्रियाज्ञानभक्तिष्वनधिकारिणाम् ।
कामिना द्रव्यदेशादिगुणदोषा प्रपञ्चिता ॥ २६॥

द्वाविंशे तत्वसख्यानामविरोधविधोच्यते ।
पुप्रकृत्योर्विवेकश्च जन्ममृत्युविधादि च ॥ २७॥

त्रयोविंशे तिरस्कारसहनोपाय इयते ।

भिक्षुगीताप्रकारेण मनसस्संयमो धिया ॥ २८॥
चतुर्विंशे तु सांख्येन मनोमोहो निवार्यते ।
आत्मनस्स्वभावानामागमापायचिन्तया ॥ २९॥
स्वपदं द्रुभक्तानामङ्गीकृत्वाय संयमम् ।
चित्रस्योक्त्वा पुनः कृष्णस्सांख्यमत्राह तत्कृते ॥ ३०॥
पञ्चविंशे स्वनैर्गुण्यप्रतिपत्त्यै निरूप्यते ।
चित्तप्रभवसत्त्वादिगुणवृत्तिरनेकधा ॥ ३१॥
षड्विंशे योगनिष्ठाया विघातो दुष्प्रसङ्गतः ।
साधुसङ्गेन तन्निष्ठा परा काष्ठेति वर्ण्यते ॥ ३२॥
योगिनो योगविभ्रंशस्सङ्गतस्सम्भवेदिति ।
सर्वथा तन्निवृत्त्यर्थमैळगीतं विवर्ण्यते ॥ ३३॥
सप्तविंशे क्रियायोगस्सद्यश्चित्तप्रसादनः ।
सर्वकामाप्तिहेतुश्च साङ्गः प्रोक्तस्समासतः ॥ ३४॥
रागाद्याकुलचित्तानां कुतो मन्त्रादिसम्भवः ।
इति कृष्णाच्चनं भद्रमनुस्मृत्यानुपृच्छति ॥ ३५॥
अष्टाविंशे तु यः पूर्वं विस्तरेणोपवर्णितः ।
ज्ञानयोगः पुनश्चासौ समाहृत्य निरूप्यते ॥ ३६॥
ऊनत्रिंशे तु यः पूर्वं विस्तरेण निरूपितः ।
भक्तियोगस्तमेवाह स्वभक्ताय समासतः ॥ ३७॥
अतिक्लेशमिवालक्ष्य योगे सङ्गैकसंसदि ।
सुखोपायं पुनः कृष्णमुद्धवः परिपृच्छति ॥ ३८॥

त्रिंशे तु प्रागुपक्षिप्तमौसलच्छलतो हरि ।
स्वधाम ग तुमा विच्छन्न सञ्जहार निज कुलम् ॥ ३९॥
एकत्रिंशे स्वक धाम जगाम भगवानित ।
तमेवानुययु प्रीता वसुदेवादयस्तत ॥ ४०॥
देवा यदू वधायादौ भूयो देवान् निधाय तान् ।
श्रीकृष्णस्स्वेच्छया धाम स्वत वैव समाविशत् ॥ ४१॥

॥ द्वादशस्कन्धे ॥

उक्तस्त्रयोदशाध्यायैर्द्वान्शेत्वाश्रयस्तत ।
अधिष्ठानावधित्वाभ्यामाश्रयश्चेश्वरस्मत ॥ १
उक्तो ल्याववित्वेन प्राकृतात्यं तिके लये ।
अधिष्ठानतया चोक्तो महापुरुषवर्णने ॥ २
तत्राद्यैष्षड्भिरध्यायैश्शुक प्राह परीक्षित ।
शेषैस्तत्रावशिष्टान्याह सूत पृष्टोऽथ सन्निभि ॥ ३
स्वाश्रयश्रवणे कार्यो न विळम्बो मनीषिणा ।
इत्येतत्कालवैषम्य चतुर्भिस्तावदुच्यते ॥ ४
तत्र तु प्रथमे भाविमागधा यथभूमिपान् ।
कलिप्रभावत प्राह सङ्करादिमलीमसान् ॥ ५
द्वितीये तु कलेर्दोषवृद्धौ कल्क्यवतारत ।
अधर्मिष्ठे जने नष्टे पुन कृतयुगागम ॥ ६
तृतीये भूमिगीतैस्तु रा यदोषादि वर्ण्यते ।

कर्शौ च दापभूयिष्ठे ापह ग्रा हरेनति ॥ ७
चतुर्रे च चतुर्थोक्ता ल्या नैमित्तिकादय ।
तत्र ससारनिस्तारो हरिकीर्त्यैव वर्ण्यते ॥ ८
पञ्चमे तु समासेन परब्रह्मोपदेशत ।
रानस्तक्षकस देशा मृ युभातिनिरारणम् ॥ ९
षष्ठे पराक्षितो मोक्षस्सवहोमादि तत्सुवात् ।
वेदशाखाविभागोक्तौ त्रिवे यासवणनम् ॥ १०
सप्तमे धमविस्तार पुराण यसन तत ।
पुराणलक्षणादीनि फल भागवतवुत्ते ॥ ११
अष्टमे तु तपश्चया माकण्डेयस्य मोहकै ।
कामाद्भिरसमोहो नरनारायणस्तुति ॥ १२
नवमे भगव मायादिक्षोभन मुहु ।
मायाशिशोदया धौ च मुनेर्निर्वेशनिगमै ॥ १३
दशमे शिव आगत्य मुनेस्तुष्टा वरानदात् ।
तेन साकमतिप्रीत्या समाभाय सभाजयन ॥ १४
एकादशे तु पूजार्थं महापुरुषवणनम् ।
रवेर्व्यूहस्य चा यान प्रतिमास पृथक्पृथक् ॥ १५
द्वादशे तु पुराणोक्तसर्वार्थानुक्रम कृत ।
प्रथमस्क धमारभ्य प्राया येन समासत ॥ १६
त्रयोदशे पुराणाना सग्यामाह यथाक्रमम् ।
दान दानस्य माहात्म्य श्रीमद्भागवतस्य च ॥ १७

---

# ॥ सिद्धान्तचन्द्रिका ॥

## ॥ श्रीमद्भागवतस्य सर्वपुराणोत्कृष्टत्वप्रतिपादकपीठिका ॥

श्रीमन्निखिलोपनिषत्प्रतिपाद्यपरमाद्वैतसिद्धान्तप्रतिपादकत्वात् अपरिमेयप्रमेयविस्तृताखिलवेदजातविभजनपूर्वकतया निखिलपुराणादिसद्ग्रन्थप्रवर्तकैः श्रीवेदव्यासभट्टारकैर्भगवद्गुणवर्णनैकप्रधानतया प्रणीतत्वात् मात्स्यगारुडाद्यनेकसद्ग्रन्थेषु उत्कृष्टतया प्रतिपादितत्वात् गीता सहस्रनाम रामायणादिशब्दानां निरुपपदानां यथाक्रमं भगवद्गीता विष्णुसहस्रनाम वाल्मीकिरामायणवाचकत्वं यथा तद्वदस्यापि भागवतशब्दस्य निरुपपदस्य श्रीविष्णुभागवतवाचकतया निखिलास्तिकशिष्टजनैरङ्गीकृतत्वात् निखिललोकाभिवन्द्यमुनिगणसंसेव्यमानानवद्यपदारविन्देन शुकमहर्षिणाप्यधीतत्वात् मोक्षशास्त्रमिदमिति निश्चयबुध्या तेनैव महर्षिणा मुमुक्षवे परीक्षिते बोधितत्वादित्याद्यनेकहेतुभिः श्रीमद्भागवतस्यास्य सर्वपुराणोत्कृष्टत्वं निखिलोपनिषत्सारत्वं च स्पष्टतरमेव दृश्यते, तथाप्यस्मद्विमतानुवर्तिभिरनाघ्रातवेदगन्धैरसम्प्रदायाधीतपुराणैः यैरनालोचिताखिलसद्ग्रन्थकथासन्दर्भैः स्वार्थास्वार्थविवेचनाभावप्रयुक्तात्यसूयावद्भिः कैश्चिन्मन्दैरिदं भागवताख्यमोक्षशास्त्रं, केनचिदाधुनिकेन बोपदेवाख्येन रचितमित्यभाणि, तत्पदवीमनुसृत्यैवा येऽपि केचिच्छुकमहर्षिणा प्रणीतमित्यवोचन् ॥ तथैवा

परे व्यासापरनाम्ना केन चिदाधुनिकेन प्रणीतमित्यूचुः, कैश्चिद्व्यासेनोपपुराणेषु सप्तदशपुराणत्वेन कृतमिति चाभिहितमेव विविधविरुद्धासद्धेतुवादकलुषितैस्स्वेच्छानुवर्तनैकायत्तशाक्तजनालकभाषितैः श्रीमद्व्यासमहर्षिप्रणीतश्रीमद्भागवतकाञ्चनशैलस्य न कापि क्षतिरिति निश्चित्य तदीयपूर्वपक्षोपपादनपूर्वकतया सहेतुभिरकुटिलार्थकैर्वचनैस्साधकबाधकनिरूपणपूर्वकतया परमसिद्धा तत्सद्भूहेण प्रकाश्यते— तथा हि—

॥ पूर्वपक्षिभिश्शाक्तैरुदाहृतप्रथमकक्ष्या ॥

हेमाद्रिनामकस्य राज्ञस्सभास्थानपण्डितेष्वग्रगण्य पण्डितजनसार्वभौमो बोपदेव, गोपालमतावलम्बिनस्तत्प्रभो प्रीणनाय, तदाज्ञानुसारेणैतत्पुराणरत्नं भगवद्व्यासप्रणीतत्वेन तन्नाम्ना विरचय्य, तस्मै राज्ञे समर्पितवान्, ततस्स भूपतिर्बहुभि पण्डितैस्साकमामूलाग्रं तदवलोक्य, विविधविचित्रभगवद्भागवतकथाविशेषैस्तत्तद्वृत्तायवर्णनोचितपदगुम्भनैर्निरिलवेदा तत्प्रतिपाद्यपरमतत्वार्थापादकवाक्यरचनादिभिश्चातिरमणीयमिदमिति निश्चित्य, तादृग्विधसर्वोत्कृष्टग्रन्थस्यैतस्यैव, भागवताख्यपुराणरत्नत्वेन लोके प्रतीतिर्यथा स्यात्तथा कर्तुं तस्मा मातृकास्थानापन्नात्पुत्रिकास्थानापन्नान्बह्वीर्मूलग्रन्थप्रतितीर्निष्पाद्य, स्वाश्रितपण्डितजनसमुदयद्वारा, तद्व्याख्यानादान कारयित्वा, लोके तद्ग्रन्थस्ततीं प्रख्यापितवानितीयं कथा तत्तद्विविधजनपरम्पराप्रवचनमूलत्तो लोके प्रख्यातैव श्रूयते, नचैवंविधजनपरम्पराप्रवचनश्रवणमात्रेणैव तत्पुराणरत्नमाधुनिकपण्डितवर्यविरचितमिति वा-

च्य, तस्मिन्नेवार्थे स्वदिहानैस्तद्व्याकर्तृभिश्श्रीधराचार्यादिभिः प्रथम स्कन्धीय प्रथमश्लोक व्याख्यानावसाने (भागवत नामा यदित्यपि न शङ्कनीय) इति लिखित, तल्लिङ्गादेवा यद्भागवत वतत दृतिद्योतते ॥ तस्मादेतस्य विष्णुभागवतस्य बोपदेवकर्तृकत्वे, न काम यत्नुपपत्ति पश्याम ॥

## ॥ पूर्वपक्षिभिश्शाक्तैरुदाहृतद्वितीयकक्ष्या ॥

श्रीमद्व्यासमहर्षिप्रणीतेषु, भारत, स्कान्द, विष्णुपुराणादि सद्ग्रन्थप्रतिपादितश्लोकानन्यनुसृतद्राक्षापाक, कैशिकावृत्त्यादीना च, श्रीमद्भागवतग्रन्थप्रतिपादितश्लोकमनुसृत्यैवानुसृतनारिकेळपाक, आर भटीवृत्त्या दीना च, तेजस्तिमिरयोरिव परस्परवैधर्म्यसद्भाव, अक्षि मद्भिर्विचक्षणैः प्रत्यक्षणासकृदुरीकृत एव भवति, यथैव लेखन, पठन, सम्भाषण, सञ्चलनालङ्करणादिग्रन्थस्वफक्किकाविरुद्धफक्किका वस्तु न लोके यत्र कुत्रापि वा साधारणतया दृश्यम्, तथैव कविरचना दिष्वप्यग्रन्थस्तश्य्यापाकवृत्त्यादीनामविरुद्धशय्यादिमत्त्वमेव तत्तत्कवि-जनवयविरचितग्रन्थेषु दृश्यते, तस्मात्पूर्वोक्तक्रमेणापि भागवते, भारतादिग्रन्थप्रतिपादितश्लोकेष्वननुसृतशय्यापाकवृत्त्यादीना विरुद्धश य्यादिसद्भावादेतत्र भगवद्व्यासकृतमिति वक्तु मुसकम् ॥

अत्रोपपादितपाक, वृत्ति, शय्या, रीत्यादीनाम्, लक्षणस्वरूप निरूपकप्रमाणवचनानि ॥

॥ प्रतापरुद्रीये, काव्यप्रकरणे "अथ कैशिक्यादीनां स्वरूपं निरूप्यते ॥

अत्यर्थसुकुमारार्थसन्दर्भा कैशिकी मता ।
अत्युद्धतार्थसन्दर्भा वृत्तिरारभटी मता ॥

इह मृद्वर्थसन्दर्भा भारतीवृत्तिरिष्यते ।
ईषत्प्रौढार्थसन्दर्भा सात्वती वृत्तिरिष्यते ॥

अत्र

अत्यन्तसुकुमारौ तौ शृङ्गारकरुणौ मतौ ।
अत्युद्धतरसौ रौद्रबीभत्सौ परिकीर्तितौ ॥
हास्यशान्ताद्भुता किञ्चित्सुकुमारा प्रकीर्तिता ।
ईषत्प्रौढौ समाख्यातौ रसौ वीरभयानकौ ॥"

यत्र शृङ्गारकरुणावतिकोमलेन सन्दर्भेण वर्ण्येते, तत्र कैशिकी, यत्र रौद्रबीभत्सावतिप्रौढेन सन्दर्भेण प्रतिपाद्येते, तत्रारभटी, यत्र नातिसुकुमारा हास्यशान्ताद्भुता, नातिसुकुमारेण सन्दर्भेण प्रतिपाद्यन्ते तत्र भारती, यत्र नातिप्रौढौ वीरभयानकावनतिप्रौढेन सन्दर्भेण निबध्येते, तत्र भारतीति निश्चय, एतासामुदाहरणश्लोका ग्रन्थविस्तरभयान्नात्र प्रकाशिता ॥

अपि च तस्मिन्नेव ग्रन्थे—

मध्यमारभटीत्यन्या तथा मध्यमकैशिकी ।
वृत्ती इमे उभे सर्वरससाधारणे मते ॥

मृद्वर्थेऽप्यनतिप्रौढत्व धा मध्यमकैशिकी ।
मध्यमारभटा प्रौढेऽप्यर्थेनातिमृदुक्रमा ॥

वैदर्भ्यादिरीतीना शब्दगुणाश्रितानामर्थविशेषनिरपेक्षतया केवलस दर्भसौकुमार्यप्रौढत्वमात्रविषयत्वात् कैशिक्यादिभ्यो भेद ॥

अथ रीतीना स्वरूप निरूप्यते—

रीतिनामगुणाश्लिष्टा पदसङ्घाटनामता ॥
सा त्रिविधा—वैदर्भी, गौडी, पाञ्चाली चेति ॥

बन्धपारुष्यरहिता शब्दकाठिन्यवर्जिता ।
नातिदीर्घसमासा च वैदर्भी रीतिरिष्यते ॥

ओज कान्तिगुणोपेता गौडीया रीतिरिष्यते ।
पाञ्चालरीति वैदर्भी गौडी रीत्युभयात्मिका ॥

अथ शय्यानिरूपणम्—

या पदाना परान्योन्यमैत्री शय्येति कथ्यते ॥

अथ पाकनिरूपणम्—

अर्थगम्भीरिमा पाकस्स द्विधा हृदयङ्गम ।
द्राक्षपाको नारिकेळपाकश्च प्रस्फुटान्तरौ ॥
द्राक्षापाकस्स कथितो बहिरन्तस्स्फुरद्रस ।
सनारिकेळपाकस्स्याद न्तगूढरसोदय ॥

एवमेव वस्त्वलङ्कारप्रतीतावपि द्रष्टव्यम्, पाकान्तराणि यथा

सम्भवमूह्यानि, म थविस्तरभयादेव न तद्विषयविवेचना तु, विशेषत प्रतिपादिता ॥

॥ पूर्वपक्षिभिस्शाक्तैरुदाहृततृतीयकक्ष्या ॥

श्रीम मत्स्यपुराण, गरुडपुराण, स्कन्दपुराणादिभ्य, श्रीमच्छ्रीधराचार्य, विजयध्वजाचार्य, वीरराघवाचार्य, प्रभृतिभिर्व्याख्याकर्तृभि, प्रथमस्क धीयप्रथमश्लोकव्याख्यानावसरेऽभ्युदाहृतश्लोकेषु प्रोष्ठपदान्नक्षत्रे पूर्णिमाया च, स्वर्णरचितसिंहासनाधिरोपितस्य यथोक्तलक्षणलक्षितस्य समग्रस्य, श्रीविष्णुभागवतस्य सत्कुलीनाय श्रोत्रियाय दानेन, दातुर्मोक्षप्राप्तिरूपफलमुपदिष्टम् तथा हि—

॥ मत्स्यपुराणे पुराणदानप्रस्तावे ॥

यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तर ।
वृत्रासुरवधोपेत तद्भागवतमिष्यते ॥
लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम् ।
प्रोष्ठपद्या पौर्णमास्या स याति परम पदम् ॥ इत्यादि

अत्र प्रतिपादितरीत्या, हेमसिंहस्य च श्रीभागवतग्रन्थस्य च न कोऽपि सम्बन्ध , प्रतिपाद्यप्रतिपादकयोरभेदविवक्षया तथोक्तमिति वक्तव्य, तथासति, प्रतिपाद्यस्य भगवतो नारायणस्य गरुडवाहनत्वस्य हि लोके प्रसिद्धतया सद्ग्रन्थेषु दृश्यते, न सिंहवाहनत्वस्य, नाप्यन्यवाहनत्वस्य च प्रतिपादित भवति, अपि तु भगवत्याश्श्रीदेव्यास्तु सिंहवाहनत्वस्य तु बहुषु सद्ग्रन्थेषु, प्रसिद्धतया श्रूयते, न च

